# सिं घी जै न ग्र न्थ मा ला

[ ग्रन्थांक ३२ ]

संस्थापक
स्व॰ श्रीमद् बहादुर सिंहजी सिंघी
संरक्षक
श्री राजेन्द्र सिंह सिंघी तथा श्री नरेन्द्र सिंह सिंघी

*

प्रधान सम्पादक तथा संचालक

आचार्य जिनविजय मुनि



महामात्य - वस्तुपाल - कीर्तिकीर्तनस्वरूप - काव्यद्वय

सोमेश्वरदेव - कवि - विरचित

# कीर्तिकौमुदी

तथा

अरिसिंह कवि - कृत

# सुकृतसंकीर्तन

संपादनकर्ता

आगमप्रभाकर - मुनिप्रवर श्री पुण्यविजय सूरि

[ प्रकाशनकर्ता ]

सिंघी जैन शास्त्र शिक्षापीठ

भारतीय विद्या भवन, बम्बई. ७

वि. सं. २०१७ ]     卐     [ मूल्य रू. ६/६०

स्वर्गवासी साधुचरित श्रीमान् डालचन्दजी सिंघी



बाबू श्री बहादुर सिंहजी सिंघीके पुण्यश्लोक पिता

जन्म–वि. सं. १९२१, मार्ग. वदि ६ 卐 स्वर्गवास–वि. सं. १९८४, पोष सुदि ६

दानशील - साहित्यरसिक - संस्कृतिप्रिय

स्व० बाबू श्री बहादुर सिंहजी सिंघी



अजीमगंज-कलकत्ता

जन्म ता. २८-६-१८८५] [मृत्यु ता. ७-७-१९४४

# सिंघी जैन ग्रन्थमाला

[ ग्रन्थांक ३२ ]

महामात्य - वस्तुपाल - कीर्तिकीर्तनस्वरूप - काव्यद्वय

महाकवि - सोमेश्वरदेव - विरचित



# कीर्तिकौमुदी

तथा

कवि - अरिसिंह ठक्कुर - विरचित

# सुकृतसंकीर्तन




## SINGHI JAIN SERIES

[NUMBER 32]

Two panegyric and historical poems describing the good deeds of the great minister Vastupal of Gujarat.

## I. KĪRTIKOUMUDĪ

By Mahakavi Somes'vara Deva

## 2. SUKRITASAMKĪRTANA

By Kavi Arisimha Thakkura

क ल क त्ता नि वा सी

साधुचरित-श्रेष्ठिवर्य **श्रीमद् डालचन्दजी सिंघी** पुण्यस्मृतिनिमित्त

प्रतिष्ठापित एवं प्रकाशित

# सिंघी जैन ग्रन्थमाला

[ जैन आगमिक, दार्शनिक, साहित्यिक, ऐतिहासिक, वैज्ञानिक, कथात्मक – इत्यादि विविधविषयगुम्फित प्राकृत, संस्कृत, अपभ्रंश, प्राचीनगूर्जर, - राजस्थानी आदि नाना भाषानिबद्ध सार्वजनीन पुरातन वाङ्मय तथा नूतन संशोधनात्मक साहित्य प्रकाशिनी सर्वश्रेष्ठ जैन ग्रन्थावलि ]

प्रतिष्ठाता

श्रीमद् - डालचन्दजी - सिंघीसत्पुत्र

स्व० दानशील - साहित्यरसिक - संस्कृतिप्रिय

**श्रीमद् बहादुर सिंहजी सिंघी**




प्रधान सम्पादक तथा संचालक

**आचार्य जिनविजय मुनि**

अधिष्ठाता, सिंघी जैन शास्त्र शिक्षापीठ

निवृत्त ऑनररि डायरेक्टर

भारतीय विद्या भवन, बम्बई

*

ऑनररी फाउंडर – डायरेक्टर

राजस्थान ओरिएण्टल रिसर्च इन्स्टीट्यूट, जोधपुर ( राजस्थान )

ऑनररी मेंबर – जर्मन ओरिएण्टल सोसाईटी, जर्मनी; भाण्डारकर ओरिएण्टल रिसर्च इन्स्टीट्यूट, पूना ( दक्षिण ); गुजरात साहित्यसभा, अहमदाबाद ( गुजरात ); विश्वेश्वरानन्द वैदिक शोध प्रतिष्ठान, होसियारपुर ( पञ्जाब ) इत्यादि ।

*

संरक्षक

**श्री राजेन्द्र सिंह सिंघी तथा श्री नरेन्द्र सिंह सिंघी**

व्यवस्थापक

**अधिष्ठाता, सिंघी जैन शास्त्र शिक्षापीठ**

भारतीय विद्या भवन, बम्बई

**प्रकाशक** – ज. ह. दवे, ऑनररी डायरेक्टर, भारतीय विद्या भवन, बम्बई, नं. ७

**मुद्रक** – जयन्ती दलाल, वसन्त प्रिंटिंग प्रेस, घेलाभाईनी वाडी, घीकांटा, अहमदाबाद.

महामात्य-वस्तुपाल-कीर्तिकीर्त्तनस्वरूप-काव्यद्वय

महाकवि-सोमेश्वरदेव-विरचित

# कीर्तिकौमुदी

तथा

कवि-अरिसिंह ठक्कुर-विरचित

# सुकृतसंकीर्तन



संपादनकर्ता

अनेकग्रन्थभाण्डागारोद्धारक – विविधदुर्लभ्यग्रन्थसंशोधक

जिनागमप्रकाशकारि-प्रतिष्ठानप्रवर्तक

आगमप्रभाकर-मुनिप्रवर श्री पुण्यविजय सूरि ।



प्रकाशनकर्ता

## अधिष्ठाता, सिंघी जैन शास्त्र शिक्षापीठ

भारतीय विद्याभवन, बम्बई



विक्रमाब्द २०१७ ] प्रथमावृत्ति [ ख्रिस्ताब्द १९६१

ग्रन्थांक ३२ ]  [ मूल्य रु० ६/६०

# SINGHI JAIN SERIES

## अद्यावधि मुद्रितग्रन्थ नामावलि

१ मेरुतुङ्गाचार्यरचित प्रबन्धचिन्तामणि मूल संस्कृत ग्रन्थ.
२ पुरातनप्रबन्धसंग्रह बहुविध ऐतिह्यतथ्यपरिपूर्ण अनेक प्राचीन निबन्ध संचय.
३ राजशेखरसूरिरचित प्रबन्धकोश.
४ जिनप्रभसूरिकृत विविधतीर्थकल्प.
५ मेघविजयोपाध्यायकृत देवानन्दमहाकाव्य.
६ यशोविजयोपाध्यायकृत जैनतर्कभाषा.
७ हेमचन्द्राचार्यकृत प्रमाणमीमांसा.
८ भट्टाकलङ्कदेवकृत अकलङ्कग्रन्थत्रयी.
९ प्रबन्धचिन्तामणि – हिन्दी भाषांतर.
१० प्रभाचन्द्रसूरिरचित प्रभावकचरित.
११ सिद्धिचन्द्रोपाध्यायरचित भानुचन्द्रगणिचरित.
१२ यशोविजयोपाध्यायविरचित ज्ञानबिन्दुप्रकरण.
१३ हरिषेणाचार्यकृत बृहत्कथाकोश.
१४ जैनपुस्तकप्रशस्तिसंग्रह, प्रथम भाग.
१५ हरिभद्रसूरिविरचित धूर्ताख्यान. ( प्राकृत )
१६ दुर्गदेवकृत रिष्टसमुच्चय. ( प्राकृत )
१७ मेघविजयोपाध्यायकृत दिग्विजयमहाकाव्य.
१८ कवि अब्दुल रहमानकृत सन्देशरासक. (अपभ्रंश)
१९ भर्तृहरिकृत शतकत्रयादि सुभाषितसंग्रह.
२० शान्त्याचार्यकृत न्यायावतारवार्तिक-वृत्ति.
२१ कवि धाहिलरचित पउमसिरीचरिउ. ( अप० )
२२ महेश्वरसूरिकृत नाणपंचमीकहा. ( प्रा० )
२३ श्रीभद्रबाहुआचार्यकृत भद्रबाहुसंहिता.
२४ जिनेश्वरसूरिकृत कथाकोषप्रकरण. ( प्रा० )
२५ उदयप्रभसूरिकृत धर्माभ्युदयमहाकाव्य.
२६ जयसिंहसूरिकृत धर्मोपदेशमाला. ( प्रा० )
२७ कोऊहलविरचित लीलावई कहा. ( प्रा० )
२८ जिनदत्ताख्यानद्वय. ( प्रा० )
२९.३०.३१ स्वयंभूविरचित पउमचरिउ. भाग १. २. ३ ( अप० )
३२ सिद्धिचन्द्रकृत काव्यप्रकाशखण्डन.
३३ दामोदरपण्डित कृत उक्तिव्यक्तिप्रकरण.
३४ भिन्नभिन्न विद्वत्कृत कुमारपालचरित्रसंग्रह.
३५ जिनपालोपाध्यायरचित खरतरगच्छ बृहद्गुर्वावलि
३६ उद्द्योतनसूरिकृत कुवलयमाला कहा. ( प्रा० )
३७ गुणपालमुनिरचित जंबुचरियं. ( प्रा० )
३८ पूर्वाचार्यविरचित जयपायड-निमित्तशास्त्र. (प्रा०)
३९ भोजनृपतिरचित शृङ्गारमञ्जरी. ( संस्कृत कथा )
४० धनसारगणीकृत-भर्तृहरिशतकत्रयटीका.
४१ कौटल्यकृत अर्थशास्त्र-सटीक. ( कतिपयअंश )
४२ विज्ञप्तिलेखसंग्रह विज्ञप्तिमहालेख-विज्ञप्तित्रिवेणी आदि अनेक विज्ञप्तिलेख समुच्चय.
४३ महेन्द्रसूरिकृत नर्मदासुन्दरीकथा. ( प्रा० )
४४ हेमचन्द्राचार्यकृत-छन्दोऽनुशासन.
४५ वस्तुपालगुणवर्णनात्मक काव्यद्वय कीर्तिकौमुदी तथा सुकृतसंकीर्तन
४६ सुकृतकीर्तिकल्लोलिनी आदि वस्तुपालप्रशस्तिसंग्रह.
४७ जयसोमविरचित मंत्रीकर्मचन्द्रवंशप्रबन्ध.

•

## Shri Bahadur Singh Singhi Memoirs

**Dr. G. H. Bühler's Life of Hemachandrāchārya.**

Translated from German by Dr. Manilal Patel, Ph. D.

1 स्व. बाबू श्रीबहादुरसिंहजी सिंघी स्मृतिग्रन्थ [ भारतीयविद्या भाग ३ ] सन १९४५.
2 Late Babu Shri Bahadur Singhji Singhi Memorial Volume BHARATIYA VIDYA [ Volume V ] A. D. 1945.
3 Literary Circle of Mahāmātya Vastupāla and its Contribution to Sanskrit Literature. By Dr. Bhogilal J. Sandesara, M. A., Ph. D. (S.J.S.33.)
4–5 Studies in Indian Literary History. Two Volumes. By Prof. P. K. Gode, M. A. ( S. J. S. No. 37–38. )

## संप्रति मुद्यमाणग्रन्थनामावलि

१ विविधगच्छीय पट्टावलिसंग्रह.
२ जैनपुस्तकप्रशस्तिसंग्रह, भाग २.
३ गुणप्रभाचार्यकृत विनयसूत्र. ( बौद्धशास्त्र )
४ रामचन्द्रकविरचित-मल्लिकामकरन्दादिनाटकसंग्रह.
५ तरुणप्रभाचार्यकृत षडावश्यकबालावबोधवृत्ति.
६ प्रद्युम्नसूरिकृत मूलशुद्धिप्रकरण-सटीक.
७ कुवलयमाला कथा, भाग २
८ सिंहतिलकसूरिरचित मन्त्रराजरहस्य.

## विषयानुक्रम ।

१. प्रासङ्गिक–वक्तव्य

२. गूर्जरेश्वरपुरोहित महाकवि श्रीसोमेश्वरदेवविरचित कीर्तिकौमुदीमहाकाव्य पृ० १ - ४२

(१) नगरवर्णनो नाम प्रथमः सर्गः । १–६
(२) नरेन्द्रवंशवर्णनो नाम द्वितीयः सर्गः । १–१२
(३) मन्त्रिप्रतिष्ठा नाम तृतीयः सर्गः । १३–१६
(४) दूतसमागमनो नाम चतुर्थः सर्गः । १७–२२
(५) युद्धवर्णनो नाम पञ्चमः सर्गः । २३–२५
(६) पुरप्रमोदवर्णनो नाम षष्ठः सर्गः । २६–२९
(७) चन्द्रोदयवर्णनो नाम सप्तमः सर्गः । ३०–३३
(८) परमार्थविचारो नाम अष्टमः सर्गः । ३४–३६
(९) यात्रासमागमनो नाम नवमः सर्गः । ३७–४२

३. प्रथम परिशिष्ट पृ० ४३–८८

(1) Kathavate's Introduction to the first edition of Kirtikaumudi 43–59
(2) Professor G. Bühler's critical study of the Sukritasamkirtana of Arisimha 60–82
(3) Introduction of the Sukritasamkirtana text of late Muniraj Shri Chaturvijayaji Maharaj 83–88

४. कीर्तिकौमुदी - सुकृतसंकीर्तनमहाकाव्यगत-विशिष्टनामानुक्रम । ८९–९२

५. द्वितीय परिशिष्ट–

महाकवि - अरिसिंहविरचित सुकृतसंकीर्तनमहाकाव्य । पृ० ९५–१३६

(१) चापोत्कटान्वयवर्णनो नाम प्रथमः सर्गः । ९६-९९
(२) चौलुक्यान्वयवर्णनो नाम द्वितीयः सर्गः । ९९–१०४
(३) मन्त्रिप्रकाशो नाम तृतीयः सर्गः । १०४–१०७
(४) धर्मोपदेशनो नाम चतुर्थः सर्गः । १०७–११०
(५) सङ्घप्रस्थानो नाम पञ्चमः सर्गः । १११–११४
(६) सूर्योदयवर्णनो नाम षष्ठः सर्गः । ११५–११७
(७) शत्रुञ्जयदर्शनो नाम सप्तमः सर्गः । ११८–१२१
(९) षड्ऋतुवर्णनो नाम नवमः सर्गः । १२५–१२९
(१०) पुरप्रवेशो नाम दशमः सर्गः । १२९–१३३
(११) सकलकीर्तनकीर्त्तनो नामैकादशः सर्गः । १३३–१३६

६. कीर्तिकौमुदीमहाकाव्यस्थश्लोकानामकारादिक्रमेणानुक्रमः । १३७–१४७

७. सुकृतसंकीर्तनमहाकाव्यस्थश्लोकानामकारादिक्रमेणानुक्रमः । १४८–१५६

## प्रासंगिक वक्तव्य

*

गूर्जर महामात्य वस्तुपालकी कीर्तिको काव्यबद्ध करनेका जिन कवियोंने प्रयत्न किया है उनमें राजपुरोहित कवि सोमेश्वर और ठक्कुर अरिसिंह मुख्य हैं। कवि सोमेश्वरने कीर्तिकौमुदी नामक काव्य रच कर और अरिसिंहने सुकृतसंकीर्तन काव्य बना कर, वस्तुपालकी यशःकीर्तिको युगान्त तक स्थिर रखनेका सत्प्रयत्न किया है।

कीर्तिकौमुदी काव्यका कर्ता कवि सोमेश्वर सुप्रसिद्ध व्यक्ति है। वह वस्तुपालका अनन्य मित्र और राजपुरोहित था। वस्तुपालके गुणोंका वह बहुत अनुरागी और प्रशंसक था। वस्तुपालकी युद्धवीरता और दानवीरता का वह प्रत्यक्ष साक्षी था, इसलिये उसके काव्यकी गुणवत्ताका महत्त्व बहुत है। कविता की दृष्टिसे भी यह काव्य बहुत उच्च कोटिका है।

इस काव्यका, बहुत पहले (सन् १८८३ में) अहमदाबादके गुजरात कालेजके संस्कृतके प्रोफेसर ए. वी. काथवटे नामक विद्वान्‌ने संपादन कर 'बॉम्बे संस्कृत सीरीझ' नामक ग्रन्थमाला द्वारा प्रकाशन किया था। प्रो. काथवटेने इसकी भूमिका रूपसे एक बहुत विस्तृत इंग्रेजी प्रस्तावना लिखी, जिसमें काव्यगत बातोंका विस्तृत ऊहापोह किया है। प्रो. काथवटे संपादित यह पुस्तक अब अलभ्य है। इसलिये इसका पुनर्मुद्रण करनेकी दृष्टिसे प्रस्तुत प्रकाशन किया गया है। मूल ग्रन्थके संशोधनमें कुछ अन्य प्राचीन हस्तलिखित पोथियां भी और मिल आईं, इसलिये इसका यह प्रकाशन अधिक शुद्ध हो गया है।

इसके साथ, कवि अरिसिंह विरचित सुकृतसंकीर्तन काव्य भी सम्मिलित कर दिया है। क्यों कि ये दोनों काव्य, वर्णन और वस्तुकी दृष्टिसे, परस्पर बहुत कुछ साम्य रखते हैं।

'सुकृतसंकीर्तन' काव्यकी एक प्राचीन हस्तलिखित प्रति, जब स्व० जर्मन महाविद्वान् डॉ. ब्युहलरको मिली तो वे इसको देख कर बहुत आकृष्ट हुए और इस पर उन्होंने जर्मन भाषाके एक सुप्रसिद्ध साहित्यिक जर्नल में, बहुत बडा निबन्ध लिख कर प्रकट किया। उस निबन्ध के महत्त्वको देख कर, इ. एच्. बर्जेस नामक इंग्रेज विद्वान् ने, उसका इंग्रेजी अनुवाद कर, इन्डियन एन्टीकेरी नामक सुप्रसिद्ध पत्रिकामें प्रकट किया। पर मूल संस्कृत काव्य कहीं प्रकट नहीं हुआ था। इसलिये स्वर्गवासी मुनिवर श्री चतुरविजयजी महाराजने, इसकी प्राचीन हस्तलिखित प्रतियां प्राप्त कर, भावनगर की जैन आत्मानन्द सभा द्वारा प्रकाशित होने वाली 'आत्मानन्द जैन ग्रन्थमाला' के एक ग्रन्थके रूपमें प्रकाशित किया। यह प्रकाशन भी अब अप्राप्य है, अतः इसका पुनर्मुद्रण भी इसके साथ कर देनेका हमारा विचार हुआ। इस प्रकार इसका पुनः प्रकाशन करनेकी हमारी इच्छाका मुनिवर्य्य श्री पुण्यविजयजी महाराजने सहर्ष स्वीकार कर, अपने स्वर्गीय गुरुमहाराजके संपादनको सुप्रतिष्ठित किया।

इस प्रकार 'कीर्ति कौमुदी' और 'सुकृत संकीर्तन' इन दोनों काव्योंका संयुक्त प्रकाशन कर देना जब निश्चित हुआ, तो हमारे मनमें इन दोनों काव्योंके परिचयस्वरूप जो उक्त दो इंग्रेजी निबन्ध लिखे गये हैं, उनको भी इसमें सम्मिलित करना अधिक उपयुक्त लगा। क्यों कि वे दोनों निबन्ध अब अप्राप्य हैं; और उन निबन्धोंके विद्वान् लेखकों द्वारा जिस परिश्रम और जिस अध्ययनके फल स्वरूप वे प्रौढ निबन्ध लिखे गये हैं, सर्वथा संरक्षणीय और सदैव पठनीय हैं। अतः हमने उन दोनों विशिष्ट निबन्धोंको भी यथावत् इस प्रकाशनमें मुद्रित कर दिये हैं।

स्व० मुनिवर्य्य श्री चतुरविजयजी महाराज द्वारा संपादित और प्रकाशित 'सुकृत संकीर्तन' काव्यके प्रास्ताविक रूपमें, स्व० विद्वान् चिमनलाल डा. दलाल ( गायकवाडस् ओरिएन्टल सीरीझ, बडौदा, के मूल प्रतिष्ठापक )ने, ग्रन्थपरिचयात्मक छोटासा इंग्रेजी वक्तव्य लिखा था, उसको भी हमने इसके साथ संकलित कर देना उचित समझ कर, वैसा किया है। इस वक्तव्यमें वस्तुपालके कीर्तिकलापोंका वर्णन करने वाली समसामयिक जितनी रचनाएं, उपलब्ध हैं, उनका संक्षिप्त परिचय दिया गया है।

महामात्य वस्तुपालके जीवन और कार्योंसे संबद्ध जितनी समकालीन साहित्यिक कृतियां उपलब्ध होती हैं उनका संक्षिप्त परिचय, हमने इस ग्रन्थमालाके ४ थे ग्रन्थके रूपमें प्रकाशित 'धर्माभ्युदय महाकाव्य'के किंचित् प्रास्ताविकमें लिखा है। उससे संबद्ध 'सुकृतकीर्तिकल्लोलिनी' आदि वस्तुपालकी प्रशस्त्यात्मक रचनाओंका तथा उसके बनाये हुए मन्दिरों और मूर्तिओंके जितने शिलालेख अभी तक ज्ञात हुए हैं उन सबका भी, एक संग्रह ग्रन्थ, इसी ग्रन्थमालाके ५ वें ग्रन्थके रूपमें प्रकट किया गया है।

पहले, प्रस्तुत काव्य-द्वय भी उसी संग्रहके अन्तर्गत संकलित रूपमें प्रकट कर देनेका विचार रहा और तदनुसार इसका मुद्रण कार्य भी कराया गया। परंतु पीछेसे प्रो. काथवटे लिखित 'कीर्तिकौमुदी' की इंग्रेजी प्रस्तावना और डॉ. ब्युहलर लिखित 'सुकृत संकीर्तन' काव्यका विशिष्ट परिचायक बहुमूल्य निबन्धका इंग्रेजी अनुवाद भी, इसमें संकलित कर देनेके विचारसे, प्रस्तुत ग्रन्थ को, अब ग्रन्थमालाके ३२ वें ग्रन्थके रूपमें, पृथक् प्रकट किया जा रहा है।

'धर्माभ्युदय महाकाव्य' 'सुकृतकीर्तिकल्लोलिनी आदि वस्तुपाल-प्रशस्तिसंग्रह' तथा प्रस्तुत 'कीर्तिकौमुदी तथा सुकृतसंकीर्तन काव्य द्वय'–इन तीनों ग्रन्थोंका संपादन कार्य विद्वद्रत्न मुनिमहोदय श्री पुण्यविजयजी महाराजने किया है और इसके लिये हम इनके प्रति, अपना पुनः पुनः सादर कृतज्ञभाव प्रकट करना कर्तव्य समझते है।

महावीर जन्मदिन, चैत्र शुक्ला १३, सं. २०१७<br>
ता. ३० मार्च, १९६१, भारतीयविद्याभवन, बंबई

–मुनि जिनविजय

## –आभार प्रदर्शन–

**इस ग्रन्थके प्रकाशनमें जो द्रव्य व्यय हुआ है उसका अर्द्ध भाग भारत सरकारने देनेकी उदारता प्रकट की है, अतः इसके लिये हम भारत सरकारके प्रति अपना सादर आभार प्रकट करते हैं।**

गूर्जरेश्वरपुरोहित-

महाकविश्रीसोमेश्वरदेवविरचितं

# कीर्तिकौमुदीमहाकाव्यम् ।

( महामात्यश्रीवस्तुपालचरितात्मकम् )

## प्रथमः सर्गः ।



### ॥ नमः सर्वज्ञाय ॥

**मङ्गलाचरणम्**

[1]श्रिये सन्तु सतामेते, चिरं **चातुर्भुजा** भुजाः । यामिका इव धर्मस्य, चत्वारः स्फुरदायुधाः ॥ १

कुर्वन् गिरि[2]भुवि क्रीडां, दृष्टोन्नतपयोधरैः[3] । उल्लसच्चन्द्रकः[4] प्रीतिं, **नील[5]कण्ठः** करोतु वः ॥ २

जटा-सीमन्तकान्तं वः, श्रियेऽस्तु **शिवयो**र्वपुः । तातेत्यम्बेति वा[6]ऽऽहूतं, **गुहेन** प्रतिवक्ति यत् ॥ ३

भूयान्मुदे तदेकं वः, **शिव-केशवयो**र्वपुः । करोति प्रणतिं यस्य, भीतः प्रीतश्च मन्मथः ॥ ४

**सारस्वतं[7]मयं** वन्दे, तमोपहमहं महः । अपि सूक्ष्मपदार्थानां, साक्षात्कारं करोति यत् ॥ ५

**सरस्वतीं** सदा वन्दे, यदुर्पास्तिसमुच्छ्रिताः[8] । काव्यानि कुसुमानीव, सुवते कविपादपाः ॥ ६

**कविवर्णना**

वन्द्यास्ते कवयो येषां, सूक्तिसौरभवासिता । कृतत्रिजगदाह्लादं, कीर्तिर्भ्रमति भूभुजाम् ॥ ७

जयन्ति कवयः केऽपि, सूक्तैर्मन्त्रैरिव[9] द्रुतम् । तांस्तांश्चिद्रूपचित्तेषु, रसानावेशयन्ति[10] ये ॥ ८

मधुना लसदुत्कर्षां, कविषट्पदपद्मिनीम् । **रामायणकवे**स्तस्य, हृद्यां वन्दे सरस्वतीम् ॥ ९

स्तुमस्तमेव **वाल्मीकिं**, यत्प्रसादात् प्रशस्यते । लोकैर्दाशरथं[11] **वृत्त**मपि श्रवणदुःखकृत् ॥ १०

स नमस्यः कथं न स्यात्, सतां **सत्यवतीसुतः[12]** ? । सुपर्वोपचितं[13] चक्रे, यः स्वर्गमिव **भारतम्** ॥ ११

**कालिदासः** कविर्जातः, श्री**रामचरित**स्य यत् । स एष शर्करायोगः, पयसः समपद्यत ॥ १२

विरक्तश्चेद् दुरुक्तिभ्यो, निर्वृतिं वाऽथ वाञ्छसि । वयस्य ! कथ्यते तथ्यं, **माघ**सेवां कुरुष्व तत् ॥ १३

जनितार्जुनतेजस्कं[14] तमीश्वरमुपाश्रिता[15] । राकेव **भारवे**र्भाति, कृतिः कुवलयप्रिया ॥ १४

युक्तं **कादम्बरीं** श्रुत्वा, कवयो मौनमाश्रिताः । बाण[16]ध्वनावनध्यायो[17], भवतीति स्मृतिर्यतः ॥ १५

वचनं **धनपाल**स्य, चन्दनं मलयस्य च । सरसं हृदि विन्यस्य, कोऽभूलाम न निर्वृतः ? ॥ १६

---

१ "गम्यस्याप्ये" (सिद्धहेमसूत्र २-२-६२) इति सूत्रेण चतुर्थी, श्रियं कर्तुं सन्तु इत्यर्थः इति **टिप्पणी वा॰** पुस्तके ॥ २ पार्वत्याम्, पक्षे पर्वतभूमौ **वा॰ टि॰** ॥ ३ स्तना मेघाश्च **वा॰ टि॰** ॥ ४ उल्लसन् चन्द्रो यस्य "शेषाद्वा" (सिद्धहेम ७-३-१७५) इति बहुव्रीहौ कच्, पक्षे चन्द्रकाः चांदला इति रूढाः **वा॰ टि॰** ॥ ५ इश्वरो मयूरश्च **वा॰ टि॰** ॥ ६ **चाऽऽहू**॰ प्र॰ वासं॰ ॥ ७ ॰**तमहं व**॰ प्र॰ । ॰**तमयं व**॰ इति स्थाने ॰**तमिदं व**॰ इति संशोधितः पाठः वा॰ ॥ ८ ॰**पास्ति स**॰ मु॰ ॥ ९ स्थापनामन्त्रैः **वा॰ टि॰** ॥ १० स्थापयन्ति **वा॰ टि॰** ॥ ११ पक्षे सरवणो यो दशरथेन हतः **वा॰ टिप्पणी** ॥ १२ कृष्णद्वीपायनव्यासः **वा॰ टि॰** ॥ १३ देवाः, पक्षे शोभना अधिकाराः **वा॰ टि॰** ॥ १४ जनितम् अर्जुनस्य-पार्थस्य बलं येन तम्, अर्थाद् युधिष्ठिरम्, पक्षे अर्जुनं-निर्मलम् **वा॰ टि॰** ॥ १५ तमीश्वरं-चन्द्रम् **वा॰ टि॰** ॥ १६ बाणः कवीश्वरः शराश्च **वा॰ टि॰** ॥ १७ अणोज्झउ **वा॰ टि॰** ॥

बिल्हणस्य कवेः प्राप्तप्रसादैव सरस्वती । नीयते जातु कालुष्यं, दुर्जनैर्न घनैरपि ॥ १७

सदा हृदि वहेम श्रीहेमसूरेः सरस्वतीम् । सुवत्या शब्दरत्नानि, ताम्रपर्णी जिता यया ॥ १८

स्तुमः सुमनसां श्रेष्ठं, नीलक[1]ण्ठमहर्निशम् । दर्पकोपचितं यस्य, सर्वज्ञस्य न मानसम् ॥ १९

श्रीप्रह्लादनदेवोऽभूद्, द्वितयेन प्रसिद्धिमान् । पुत्रत्वेन सरस्वत्याः, पतित्वेन जयश्रियः ॥ २०

श्रीभोज-मुञ्जदुःखार्ता, रम्यां वर्तयता कथाम् । प्रह्लादनेन साह्लादा, पुनश्चक्रे सरस्वती ॥ २१

कवीन्द्रश्च मुनीन्द्रश्च, नरचन्द्रो जयत्ययम् । प्रशस्तिर्यस्य काव्येषु, सङ्क्रान्ता हृदयादिव ॥ २२

मुनेर्विजय[2]सेनस्य, सुधामधुरया गिरा । भारतीमञ्जुमञ्जीरस्वरोऽपि परुषीकृतः ॥ २३

सुभटेन पदन्यासः, स कोऽपि स[3]मितौ कृतः । येनाधुनाऽपि धी[4]राणां, रोमाञ्चो नापचीयते ॥ २४

स्ववाक्पाकेन यो वाचां, पाकं शास्त्यपरान् क[5]वीन् । स्वयं हरिहरः सोऽभूत्, कवीनां [6]पाकशासनः ॥ २५

न माघः श्लाघ्यते कैश्चिन्नाऽभिन[7]न्दोऽभिनन्द्यते । निष्कलः कालिदासोऽपि, यशोवीरस्य सन्निधौ ॥ २६

प्रकाश्यते [8]सदा साक्षाद्, यशोवीरेण मन्त्रिणा । मुखे द[9]न्तद्युता ब्राह्मी, करे श्रीः स्वर्णमुद्रया ॥ २७

अर्जितास्ते [10]गुणास्तेन, [11]चौहमानेन्द्रमन्त्रिणा । विधेरब्धेश्च नन्दिन्यौ, यैरनेन नियन्त्रिते ॥ २८

वस्तुपाल-यशोवीरौ, सत्यं वाग्देवतासुतौ । एको दानस्वभावोऽभूदुभयोरन्यथा कथम् ? ॥ २९

## सज्जन-दुर्जनवर्णना

[12]हृदा यादःपरित्यक्ता, निर्व्याला मलयद्रुमाः । अमालिन्यकृतो दीपाः, श्रीपात्रं सन्तु साधवः ॥ ३०

साधूनां लुब्धता काचिदचिन्त्यैव तथाहि ये । परेषामेव गृह्णन्ति, गुणान् भूरिगुणा अपि ॥ ३१

रमयन्ति न कं नाम, सन्तश्छायाद्रुमा इव । [13]पुष्यन्ति स्मितपुष्पं ये, सूचितोच्चैःफलोदयम् ॥ ३२

अमृतैर्मा[15]नसं मन्ये, सपूर्णं सततं सताम् । स्यन्देनेव तदीयेन, वाचो मुञ्चन्ति नाऽऽर्द्रताम् ॥ ३३

अश्रुप्रवर्तकैर्धूमैरिव किं तैरसाधुभिः ? । रसवत्यां कवेरुक्तौ, मालिन्यं जनयन्ति ये ॥ ३४

वृश्चिकानां भुजङ्गानां दुर्जनानां च वेधसा । विभज्य नियतं न्यस्तं, विषं पुच्छे मुखे हृदि ॥ ३५

अस्मिन् कलौ खलोत्सृष्टदुष्टवाग्बाणदारुणे । कथं जीवेज्जगन्न स्युः, सन्नाहाः सज्जना यदि ? ॥ ३६

निदानं नात्र पश्यामि, यदुपेत्यापि दुर्जनाः । आक्रोशन्ति भृशं साधूनध्वगानिव कुर्कुराः ॥ ३७

दोषज्ञैस्तेन रा[14]ज्ञेव, सह साधनरा सभा । त्याज्याऽवकरभूमीव, सहसा घनरासभा ॥ ३८

दुर्जनैस्तर्ज्यमानस्य, साधोरधिकमेधते । भस्मभिर्मृज्यमानस्य, मुकुरस्येव चारुता ॥ ३९

आस्तां तावत् कृतक्रोधः, सप्रमोदोऽपि दुर्जनः । कष्टाय जायते दृष्टो, रतेवानिव वायसः ॥ ४०

दुर्जनानां द्विजिह्वत्वख्यातिरेषा मृषैव यत् । विश्वोपतापिनां तेषामुचिता सप्तजिह्वता ॥ ४१

अस्मिन्नसमयारण्ये, खलवेतालसङ्कुले । चरतः सज्जनालापाः, शिखाबन्धीभवन्तु मे ॥ ४२

---

१ कविम्, पक्षे ईश्वरम् **वा० टि०** ॥ २ °**र्यसिंहस्य** मु० ॥ ३ मितौ–प्रमाणग्रन्थे स स कोऽपि पदन्यासः कृतः । पक्षे समितौ सङ्ग्रामे **वा० टि०** ॥ ४ विदुषां वीराणां च **वा० टि०** ॥ ५ कवीन् जलपक्षिणः हंसान् **वा० टि०** ॥ ६ इन्द्रः **वा० टि०** ॥ ७ °**न्दोऽपि नन्द्य**° वा० ॥ ८ **सतां सा**° प्र० वा० ॥ ९ ३१ (तृतीयैकवचनम् इत्यर्थः) **वा० टि०** ॥ १० औदार्यादयः, पक्षे रज्जवः **वा० टि०** ॥ ११ चहूआण **वा० टि०** ॥ १२ **हृदापदः** मु० ॥ १३ **पुष्पन्ति** वा० । **पुष्यन्ति** मु० ॥ १४ **राज्ञेव** प्र० वा० ॥ १५ °**तमानि**° प्र० ॥

सोऽस्ति कश्चन यो दृष्टोऽप्यशुद्धानां विशुद्धये । तेऽपि तिष्ठन्ति ये दृष्टाः, शुद्धानामप्यशुद्धये ॥ ४३

### कवेः वस्तुपालचरितवर्णनप्रतिज्ञा

कुलमुज्ज्वलमाकारं, चारुमाचारमुत्तमम् । दानं सम्मानसम्पन्नमुन्नतिं नमिताहिताम् ॥ ४४

प्रज्ञामाङ्गिरसावज्ञां[1], दयां भग्नभयोदयाम् । श्लोकं भूषितभूर्लोकं, मन्त्रितां न्याययन्त्रिताम् ॥ ४५

विलोक्य **वस्तुपालस्य**, भक्तिं चात्मनि निर्भराम् । **श्रीसोमेश्वरदेवेन**, तत्स्वरूपं निरूप्यते[2] ॥

त्रिभिः कुलकम् ॥ ४६

मन्त्रीशगुणमाणिक्यश्रेणिलाभमहोत्सवे । **श्रीसोमेश्वरदेवस्य**, गातुमुत्ताम्यतीव गीः ॥ ४७

### अणहिल्लपत्तननगरवर्णनम्

अस्ति हस्तिमदक्लेदविराजद्गोपुरं[3] पुरम् । **अणहिल्लपुरं** नाम, धाम श्रेयःश्रियामिह ॥ ४८

कृतहारानुकारेण, प्राकारेण चकास्ति यत् । सुकृतेन वृतीभूय, त्रायमाणं कलेरिव ॥ ४९

अनेकानोकहच्छन्ना, प्रत्यासन्ना वनावलिः । यत्रोन्नतस्य वप्रस्य, च्छायेव प्रतिभासते ॥ ५०

चन्द्रशालासु बालानां, खेलन्तीनां निशामुखे । यत्र वक्त्रश्रिया भाति, शतचन्द्रं नभस्तलम् ॥ ५१

कुत्रापि श्रुतिनिर्घोषैः, क्वचिन्मङ्गलगीतिभिः । बन्दिकोलाहलैः क्वापि, यत् सदा मुखरं पुरम् ॥ ५२

धौतेव सुधया यत्र, तुषारेणेव[4] भूषिता । रचिता रजतेनेव[5], राजते सौधपद्धतिः ॥ ५३

दत्तचित्तप्रसादेषु, प्रासादेषु सदा वसन् । यत्र शम्भुर्न कैलासविलासमभिलष्यति ॥ ५४

यस्मिन् होमानलोद्भूतधूमधोरणिरुध्यती[6] । विभाति भानुकन्येव, स्वर्गङ्गासङ्गमोन्मुखी ॥ ५५

यत्र सौधांशुविध्वस्तसमस्ततिमिरे पुरे । न स्वैरिणीसपक्षस्य[7], पक्षस्य भवति क्षणः ॥ ५६

**लङ्का** शङ्कावती **चम्पा**, साकम्पा[8] **विदिशा**[9] कृशा । **काशि**र्नाशितसम्पत्ति**र्मिथिला** शिथिलादरा ॥ ५७

**त्रिपुरी** विपरीतश्री**र्मथुरा**[10] मन्थराकृतिः । **धारा**ऽप्यभून्निराधारा, यत्र जैत्रगुणे सति ॥ युग्मम् ॥ ५८

पुरान्तराणि निर्जित्य, जेतुं पौरन्दरं पुरम् । पत्रालम्बं करोतीव, यत् प्रासादध्वजांशुकैः ॥ ५९

**यमुनेव मधुपघ्नं, साकेतं**[11] **सरयू**[12]रिव । **गजाह्वयं** च **गङ्गेव**, सेवते यत् सरस्वती ॥ ६०

भान्ति देवालया यस्मिन्, **हिमालयसमश्रियः** । भूतलं व्याप्य भूपानां[13], कीर्तिकूटा इवोद्गताः ॥ ६१

जातशैत्यश्चलच्चैत्यपताकापवनैः क्षणम् । अरुणस्तरुणेनापि, यत्र पूष्णा न पीड्यते ॥ ६२

यत्र नारीमनश्चौरान्, पौरान् सौराज्यराजिते । निगृह्णन्निषुभिः पौष्पैर्द्वैराज्यं कुरुते स्मरः ॥ ६३

कौरवेश्वरसैन्यस्य, यत्पौरस्त्रीजनस्य च । वलद्गाङ्गेय[14]-**कर्णस्य**, न पश्याम्यहमन्तरम् ॥ ६४

यस्य राजपथे पांसुः, सिक्तः कुम्भिमदाम्बुभिः । ऊर्ध्वमभ्युद्धृतो[15]ऽप्येति, न रङ्गद्भिस्तुरङ्गमैः ॥ ६५

गृहीतभूरिदण्डानां, विडम्बितमहीभुजाम् । यत्रत्यानां नरेन्द्राणां, प्रासादानां च नान्तरम् ॥ ६६

---

१ आङ्गिरसस्य बृहस्पतेरवज्ञा यस्याः ताम् **वा० टि०** ॥ २ **निगद्यते** वा० ॥ ३ प्रतोल्यः **वा० टि०** ॥ ४ **°व रूषि°** प्र० ॥ ५ **°जतेनैव** मु० ॥ ६ **°ध्यता** मु० ॥ ७ सहायस्य **वा० टि०** ॥ ८ **सकम्पा** मु० ॥ ९ **विदशा** प्र० । **विशदा कृ°** वा० ॥ १० मथुरानगरी **वा० टि०** ॥ ११ कोशलानगरी **वा० टि०** ॥ १२ सरयूर्नाम नदी **वा० टि०** ॥ १३ **भूतानां** प्र० मु० ॥ १४ **चलद्गा°** प्र० ॥ १५ **भ्युद्धता** मु० ॥

भाति यत्र कपोलान्तःसङ्क्रान्तेन्दुर्वधूजनः । राजमुद्राङ्कितः कोशः, कन्दर्पनृपतेरिव ॥ ६७

यत्र यत्र प्रसर्पन्ति, सलीलं यन्मृगीदृशः । दासीव दृष्टिरन्वेति, तत्र तत्र विलासिनाम् ॥ ६८

वीक्षिता वलितग्रीवं, तन्वीभिर्यत्र केऽपि[1] ये । मन्ये व्यावर्तिताङ्गेन, तेऽनङ्गेनापि[2] ताडिताः ॥ ६९

रूपेणाप्रतिमाः कान्ता, यत्र धात्रा कृताः किल । तथापि प्रतिमास्तासां, सञ्जाता रत्नभित्तिषु ॥ ७०

स्नात्वा सरसि सौरभ्यं, लीलोद्यानादुपाहरन् । तमीसमीरणः स्त्रैणं, यत्र कामीव सेवते ॥ ७१

## सिद्धसरोवर्णनम्

यस्मिन् सरो हरोपेन्द्रप्रासादैः परितश्रितम् । आमुक्तमौक्तिकं भूमेर्भात्येकमिव कुण्डलम् ॥ ७२

आभाति यस्य गम्भीरं, सरः स्मेरैः सरोरुहैः । खेलन्तीनां सुखं तोयदेवतानां मुखैरिव ॥ ७३

यस्यान्तर्गिरिशागारदीपका[3]ः प्रतिबिम्बिताः । शोभन्ते निशि पातालव्यालमौलिमणिश्रियः ॥ ७४

यस्योच्चैः सरसस्तीरे, राजते रजतोज्ज्वलः । **कीर्तिस्तम्भो** नभोगङ्गाप्रवाहोऽवतरन्निव ॥ ७५

हरप्रासादसन्दोहमनोहरमिदं सरः । राजते नगरं तच्च, राजहंसैरलङ्कृतम् ॥ ७६

सशङ्ख-चक्रः[4] प्रथितप्रभूताव[5]तारशाली कमलाभिरामः ।
स एष कासारशिरोवतंसः, कंसप्रहर्तुः प्रतिमां[6] बिभर्ति ॥ ७७

न **मानसे** माद्यति मानसं मे, **पम्पा** न सम्पादयति प्रमोदम् ।
**अच्छोद**मच्छोदकमप्यसारं, **सरोवरे राजति सिद्धभर्तुः**[7] ॥ ७८

प्रतितटघटितोर्मिघातजातप्रसृमरफेनकदम्बकच्छलेन ।
हरहसितसितद्युतिं[8] स्वकीर्तिं, दिशि दिशि कन्दलयत्ययं तडागः ॥ ७९

अलघुलहरिलिप्तव्योमभागे तडागे, तरलतुहिनपिण्डापाण्डुडिण्डीरदम्भात् ।
तरुगतरणितापव्यापदापन्नमुच्चैरिह विहरति ताराचक्रवालं विशालम् ॥ ८०

एकत्र स्फुटदब्जराजिरजसा बभ्रूकृतः सुभ्रुवां, प्रभ्रश्यत्कुचकुम्भकुङ्कुमरसैरन्यत्र रक्तीकृतः ।
अन्यत्र[10] स्मितनीलनीरजदलच्छायेन[11] नीलीकृतः, श्रेयःसिन्धुरवर्णक[12]म्बलधुरां[13] धत्ते सरःशेखरः ॥ ८१

**॥ इति श्रीगूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये नगरवर्णनो नाम प्रथमः सर्गः ॥**



---

१ °पि यत् प्र० मु० ॥ २ °पि पीडिताः वा० ॥ ३ °दीपिकाः मु० ॥ ४ °चक्रप्रथितः प्रभू° मु० ॥ ५ अवतारास्तीर्थाभिधाः पक्षे "मत्स्यः १ कूर्मो २ वराह ३ श्च" इत्यादि दशावताराः वा० टि० ॥ ६ प्रतिभां प्र० ॥ ७ °से मेद्य° मु० ॥ ८ देवसरोवरं श्रीसिद्धराजजयसिंहदेवस्य वा० टि० ॥ ९ हरिहरहसितद्युतिं मु० ॥ १० अप्यत्र प्र० वा० ॥ ११ "सेनाशालासुराच्छाया–" २ । ४ । २५ । इति न पुंस्त्वम् वा० टि० ॥ १२ °वर्ण्यक° प्र० ॥ १३ धुरं मु० ॥

## द्वितीयः सर्गः ।

**चौलुक्यवंशवर्णनम्**

अथ **चौलुक्य**भूपालः, पालयामास तत् पुरम् । जितराजसमाजः श्री**मूलराज** इति श्रुतः॥ १

आवर्जिता जितारातेर्गुणैर्बा[1]णारिपोरिव । गूर्जरेश्वरराज्यश्रीर्यस्य जज्ञे स्वयंवरा ॥ २

**लाटेश्वर**स्य सेनान्यमसामान्यपराक्रमः । दुर्वारं **वारपं** हत्वा, हास्तिकं यः समग्रहीत् ॥ ३

सपत्राकृत[2]शत्रूणां, सम्प[3]राये स्व[4]पत्त्रिणाम् । महे[5]च्छ[6]ः कच्छभूपालं लक्षं[7] लक्षं[8] चकार यः ॥ ४

दानोप[9]द्रुतदारिद्र्यं, शौर्यनिर्जितदुर्जनम् । कीर्तिस्थगितकाकुत्स्थं, यो राज्यमकरोच्चिरम् ॥ ५

तस्मिन्नथ कथाशेषे, निःशेषितनिजद्विषि । राजा **चामुण्डराजो**ऽभून्महीमण्डलमण्डनम् ॥ ६

विरोधिवनिताचित्ततापाध्यापनपण्डिताः । यदीयाः कटकारम्भाः, कृतजम्भारिभीतयः ॥ ७

पाणिपङ्कजवर्तिन्या, स्फुरत्कोश[10]विलासया । यस्यासिभ्रमरश्रेण्या, भिन्ना वंशाः क्षमाभृताम् ॥ ८

लोके[11]त्रयोल्लसत्कीर्तिर्महीपतिमतल्लिका । राजा **वल्लभराजा**ख्यस्ततस्तत्तनुभूरभूत् ॥ ९

सम्भूतकम्पसम्पत्तेर्यदातङ्केन केनचित् । जगाल **मालवेश**स्य, करवालः करादपि ॥ १०

उपरुन्धन् विरुद्धानां, पुरीं पुरुषपौरुषः । **जग[12]ज्झम्पन** इत्येष, विशेषज्ञैरुदीरितः ॥ ११

बभूव भूपतिस्तस्यावरजो विरजस्तमाः । श्रीमान् **दुर्लभराजा**ख्यः, सुदुर्लभयशाः परैः ॥ १२

कालेन करवालेन, भोगिनेवाभिरक्षितम् । निधानमिव यद्राज्यमनाहार्यं परैरभूत् ॥ १३

सर्वथाऽनुपभोग्येषु, यस्य सौभाग्यभासिनः । न करः परदारेषु, द्विज[13]सारेषु चापतत् ॥ १४

तस्य भ्रातृसुतः श्रीमान्, **भीमा**ख्यः पृथिवीपतिः । विष्टपत्रितयाभीष्टप्रवृत्तिप्रतिभूरभूत् ॥ १५

मण्डला[14]ग्रेण यः शैत्य[15]शालिना विस्मृतस्मित[16]म् । चकार **भोज**मम्भोजमिव पीयूषदीधितिः ॥ १६

एकधारापतिर्यस्य, द्विधारेणासिना जितः । किं चित्रं ? यदसौ जेतुं, शतधारमपि क्षमः ॥ १७

असौ गुणीति मत्वेव, **भोजः** कण्ठमुपेयुषा । धनुषा गुणिना यस्य, नश्यन्नश्वान्न पातितः ॥ १८

सुपर्णकेतनाभ्यर्ण[17], तत्र क्षत्त्रपतौ गते । धात्रीं[18] पोत्रीव[19] तत्पुत्रः, श्री**कर्णः** सार्णवां दधे ॥ १९

गुरुणा विक्रमेणायं, बभूव पितृसन्निभः । आकारेण तु रम्येण, भूपोऽभूदात्मभूसदृक् ॥ २०

विना कर्णेन तेन स्त्रीनेत्राणां न रतिः क्वचित् । इतीव जज्ञिरे तेषा[20]मुपकर्णं प्रवृत्तयः ॥ २१

---

१ नारायणस्य **वा० टि०** ॥ २ अत्यन्तपीडिताः **वा० टि०** ॥ ३ संग्रामे **वा० टि०** ॥ ४ स्वधनुषाम् **वा० टि०** ॥ ५ **महेच्छककच्छभूपालं लक्षं लक्षीचकार** मु० ॥ ६ उदारः **वा० टि०** ॥ ७ लाषउ इति नामानम् **वा० टि०** ॥ ८ **लक्षीचकार** मु० । वेध्यम् **वा० टि०** ॥ ९ °**पहत**° मु० ॥ १० कोशः खड्गपिधानकम्, पक्षे कुड्मलम् **वा० टि०** ॥ ११ **लोकोत्तरलस**° प्र० ॥ १२ °**गत्कम्प**° मु० ॥ १३ ब्राह्मणधनेषु **वा० टि०** ॥ १४ खड्गेन, पक्षे प्रधानमण्डलेन **वा० टि०** ॥ १५ तीक्ष्णत्वम्, पक्षे शीतलत्वम् **वा० टि०** ॥ १६ हास्यं विकाशश्च **वा० टि०** ॥ १७ नारायणसमीपम्, स्वर्गमित्यर्थः **वा० टि०** ॥ १८ °**त्रीं धात्रीप्रपौत्रीं च श्री**° मु० ॥ १९ वराहः **वा० टि०** ॥ २० °**षामनुक**° मु० ॥

तत्कर्णा-ऽर्जुनयोर्वैरं, पूर्वं कर्णः स्मरन्निव । अर्जुनं गमयामास, यशो देशान्तराणि यः ॥ २२

अभिरामगुणग्रामो, रामो दशरथादिव । सूनुः श्री**जयसिंहो**ऽस्माज्जायते स्म जगज्जयी ॥ २३

शिशुनाऽपि शुनासीरवीरवृत्तिमतीयुषा । रुषा भुजिष्यतां नीताः, पिशुना येन भूभुजः ॥ २४

अपारपौरुषोद्गारं, **खङ्गारं** गुरुमत्सरः । **सौराष्ट्रं** पिष्टवानाजौ, करिणं केसरीव यः ॥ २५

असङ्ख्यहरिसैन्येन, प्रक्षिप्तानेकभूभृता । बद्धः **सिन्धुपति**र्येन, वैदेहीदयितेन वा[1] ॥ २६

अमर्षणं मनः कुर्वन्, विपक्षोर्वीभृदुन्नतौ । अगस्त्य इव यस्तूर्णं**मर्णोराज**मशोषयत् ॥ २७

गृहीता दुहिता तूर्णं**मर्णोराज**स्य विष्णुना । दत्ताऽनेन पुनस्तस्मै, भेदोऽभूदुभयोरयम् ॥ २८

द्विषां शीर्षाणि लूनानि, दृष्ट्वा तत्पादयोः पुरः । चक्रे **शाकम्भरीशो**ऽपि, शङ्कितः प्रणतं शिरः ॥ २९

**मालवस्वामिनः** प्रौढलक्ष्मीपरिवृढः स्वयम् । समित्यपरमारो यः, **परमारा**नमारयत् ॥ ३०

क्षिप्त्वा **धारापतिं** राजशुकवत् काष्ठपञ्जरे । यः काष्ठापञ्जरे कीर्तिराजहंसीं न्यवीविशत् ॥ ३१

एकैव जगृहे **धारा,** नगरी **नरवर्मणः** । दत्ता येनाश्रुधारास्तु, तद्वधूनां सहस्रधा ॥ ३२

**धारा**[3]भङ्गप्रसङ्गेन, यस्या[4]ऽऽसन्नस्य शङ्कितः । प्राघूर्णकमिषाद् दण्डं, **महोबकपति**र्ददौ[5] ॥ [6]३३

सुधेव वसुधा लब्धुं, वाञ्छिता येन विद्विषा । यस्योल्लसदसिर्बाहू, राहूचक्रे तमाहवे ॥ ३४

जनेन मेने यः स्वामी, कुमार इव शक्तिमान् । ताम्रचूडध्वजः सोऽभूत्, किन्तु केकिध्वजः परः ॥ ३५

येन विश्वैकवीरेण, न स राजा जितो न यः । काष्ठा काऽपि न सा यस्य, यशोभिः शोभिता न या ॥ ३६

गणेशस्येव यस्याग्र्यपुष्करस्य वृ[7]षस्थितेः । आज्यसारः करस्थोऽभूद्, **गौडो** मोदकवन्नृपः ॥ ३७

श्मशाने यातुधानेन्द्रं, बद्ध्वा **बर्बरका**भिधम् । **सिद्धराजे**ति राजेन्दुर्यो जज्ञे राजराजिषु ॥ ३८

रजोभिः समरोद्भूतैर्यत् पुरा मलिनीकृतम् । तत् पश्चात् कीर्तिकल्लोलैर्येन क्षालितमम्बरम् ॥ ३९

महीमण्डलमार्तण्डे, त[8]त्र लोकान्तरं गते । श्रीमान् **कुमारपालो**ऽथ, राजा रञ्जितवान् प्रजाः ॥ ४०

पृथुप्रभृतिभिः पूर्वैर्गच्छद्भिः पार्थिवैर्दिवम् । स्वकीयगुणरत्नानां, यत्र न्यास इवार्पितः ॥ ४१

न केवलं महीपालाः, सायकैः समराङ्गणे । गुणैर्लोकम्पृणैर्येन, निर्जिताः पूर्वजा अपि ॥ ४२

सु[9]कृतैकरतेर्यस्य, मृतवित्तानि मुञ्चतः । देवस्येव नृदेवस्य, युक्ताऽभूदमृतार्थिता ॥ ४३

करवालजलैः स्नातां, वीराणामेव योऽग्रहीत् । धौतां बाष्पाम्बुधाराभिर्निर्वीरा[10]णां न तु श्रियम् ॥ ४४

शूराणां सम्मुखान्येव, पदानि समरे ददौ । यः पुनस्तत्कलत्रेषु, मुखं चक्रे पराङ्मुखम् ॥ ४५

हृदि प्रविष्टयद्बाणक्लिष्टेनाघूर्णितं शिरः । **जाङ्गलक्षोणिपालेन**, व्याचक्षाणैः परैरपि ॥ ४६

चूंडारत्नप्रभाकम्रं, नम्रं गर्वादकुर्वतः । क्रमशः **कुङ्कणेश**स्य, यश्चकार शरैः शिरः ॥ ४७

---

१ इन्द्रः **वा० टि०** ॥ २ वा इवार्थे **वा० टि०** ॥ ३ °**राध्वंसप्र**° मु० ॥ ४ **यस्य सान्निध्यश**° मु० ॥ ५ **महोदयपति**° प्र० वा० ॥ ६ एतत्पद्यानन्तरमस्मत्पार्श्वस्थप्राचीनप्रतिद्वयेऽप्यनुपलभ्यमानं मुद्रितपुस्तके टिप्पण्यामधिकमेकं पद्यं निष्टङ्कितं वर्तते । तथाहि—

**महोबकपुराधीशाज्जितान्मदनवर्मणः । कोटीः षण्णवतीर्हेम्नो, यस्तन्मानमिवाऽऽददे ॥**

७ वृषः पुण्यम्, पक्षे मूषकः **वा० टि०** ॥ ८ **यत्र** वा० ॥ ९............**रते**° प्र० । **वीतरागरते** मु० । मुद्रितपुस्तकगतोऽयं पाठः केनचिद् रिक्तस्थाने कल्पयित्रा पूरितः, न चासौ समीचीन इति ॥ १० °**राणां तु न श्रि**° प्र० वा० । निःपतिसुतानां **वा० टि०** ॥

रागाद् भूपाल**वल्लाल-मल्लिकार्जुन**योर्मृधे । गृहीतौ येन मूर्धानौ, स्तनाविव जयश्रियः ॥ ४८

**दक्षिणक्षितिपं** जित्वा, यो जग्राह द्विपद्वयम् । तद्यशोभिः करिष्यामो, विश्वं नश्यद्विपद् वयम् ॥ ४९

विहारं कुर्वता वैरिवनिताकुचमण्डलम् । महीमण्डलमुद्दण्डविहारं येन निर्ममे ॥ ५०

पादलग्नैर्महीपालैः पशुभिश्च तृणाननैः । **यः प्रार्थित इवात्यर्थमहिंसाव्रतमग्रहीत्** ॥ ५१

भूपालोऽ**जयपालो**ऽभूत्, कल्पद्रुमसमस्ततः । चक्रे वसुन्धरा येन, काञ्चनैरनकिञ्चना ॥ ५२

दण्डे मण्डपिका हैमी, सह मत्तैर्मतङ्गजैः । दत्त्वा पादं गले येन, **जाङ्गलेशाद**गृह्यत ॥ ५३

**जामदग्न्य** इवोद्दामधामभर्त्सितभास्करः । क्षत्रास्रक्षालितां धात्रीं, श्रोत्रियत्राचकार यः ॥ ५४

दानानि ददतो नित्यं, नित्यं दण्डयतो नृपान् । नित्यमुद्वहतो नारीर्यस्याऽऽसीत् त्रिर्गणः समः ॥ ५५

धृतपार्थिवनेपथ्ये, निष्क्रान्तेऽत्र शतक्रतौ । जयन्ताभिनयं चक्रे, **मूलराज**स्तदङ्गजः ॥ ५६

चापलादिव बालेन, रिङ्खता समराङ्गणे । **तुरुष्काधिपते**र्येन, विप्रकीर्णा वरूथिनी ॥ ५७

यच्छिन्नम्लेच्छकङ्कालस्थलमुच्चैर्विलोकयन् । पितुः प्रालेयशैलस्य, न स्मरत्य**र्बुदाचलः** ॥ ५८

द्रुतमुन्मूलिते तत्र, धात्रा कल्पद्रुमाङ्कुरे । उज्जगामानुजन्माऽस्य, श्री**भीम** इति भूपतिः ॥ ५९

भीमसेनेन **भीमो**ऽयं, भूपतिर्न कदाचन । बकापकारिणा तुल्यो, राजहंसदमक्षमः ॥ ६०

मन्त्रिभिर्माण्डलीकैश्च, बलवद्भिः शनैः शनैः । बालस्य भूमिपालस्य, तस्य राज्यं व्यभज्यत ॥ ६१

## वीरधवलवंशवर्णनम्

अथ तत्रैव **चौलुक्यवंशे** शाखान्तरोद्गतः । **अर्णोराज**ः स राजर्षिस्तं ममर्ष न विप्लवम् ॥ ६२

**धवलस्य** सुतेनापि, तेन कृष्णानुकारिणा । राष्ट्रं निष्कण्टकीकर्तुमारेभे **सुभटेन** तत् ॥ ६३

विस्फुरत्तीव्रहेतीनां दवानामिव सर्वतः । दुष्टानां व्यथितानिष्टं, यत्कृपाणपयोधरः ॥ ६४

विचिन्वता रुचिं हैमीं, द्विषदुद्वेगदायिना । व्याप्तं यस्य प्रतापेन, यशसा च जगत्त्रयम् ॥ ६५

आ सम्भवादुदूढस्य, निर्व्यूढस्य च सङ्गरे । प्राणैरुद्यापनं चक्रे, निजशौर्यव्रतस्य यः ॥ ६६

तत्पुत्रः प्रसरत्कीर्तिपताकाचुम्बिताम्बरः । श्री**लावण्यप्रसादो**ऽस्ति, प्रासादः शौर्यसम्पदः ॥ ६७

आकाशमिव चन्द्रेण, पारीन्द्रेणेव काननम् । रम्यं तथाऽनतिक्रम्यं, कुलं येन बभूव तत् ॥ ६८

जघ्ने येनासिदण्डेन, गाढं, **नड्डूलनायकः** । निर्वर्तितेनैव तेनामी, कम्पन्तेऽद्यापि भूभृतः ॥ ६९

न चौरास्तस्य सौराज्ये, दौरात्म्यं कुर्वते क्वचित् । स्वयमेष पुनः कीर्तिं, हरति प्रतिभूभुजाम् ॥ ७०

तेजस्तदिह दान्तारि, दशमस्तक-लङ्घ्योः । बभूव भुजयोर्यस्य, राम-लक्ष्मणयोरिव ॥ ७१

पुण्डरीकं दधत्येकं, राजहंसाननेकशः । आकृष्टारियशःफेना, प्रतस्थे यस्य वाहिनी ॥ ७२

समन्ततोऽपि सामन्तगोष्ठ्यैर्निष्ठुरोक्तिभिः । नाऽऽसीन्नृपतिनागस्य यस्य लीलागतिक्षतिः ॥ ७३

पुरो मन्दरवद् वीक्ष्य यं निष्कम्पतया स्थितम् । विनिवृत्तमुपेत्यापि, **धाराधीशपयोधिना** ॥ ७४

**दक्षिणः** क्षोणिपालोऽपि, घनसैन्योऽल्पविक्रमः । येन तद्विपरीतेन, परित्यजति विग्रहम् ॥ ७५

---

१ श्रोत्रियस्य दत्ते श्रोत्रियत्राकरोति **वा० टि०** ॥ २ समुदायः **वा० टि०** ॥ ३ वेषः **वा० टि०** ॥ ४ °**र्णा विरू**° प्र० वा० ॥ ५ °**र्षिस्तं नामर्षत विप्ल**° मु० ॥ ६ **वितन्व**° वा० ॥ ७ °**षमुद्रे**° वा० ॥ ८ **नड्डूल**° वा० । **नड्डुल**° मु० ॥ ९ °**स्तत्र सौ**° मु० ॥ १० °**स्थे तस्य** मु० ॥

**श्रीवीरधवल**स्तस्य, सूनुर्वीरशिरोमणिः । युद्धे जयश्रियं धन्व-ज्यारावैराजुहाव यः[1] ॥　७६

आत्मानमात्मजे तस्मिन्नशेषगुणभूषणम् । स पिता दर्पणप्राये, सङ्क्रान्तमिव पश्यति ॥　७७

बाहुभ्यामिव विक्रान्तो, दन्ताभ्यामिव कुञ्जरः । अधृष्यः पितृ-पुत्राभ्यां, वंशस्ताभ्यां बभूव सः ॥　७८

कृतविश्वमुदाऽनेन, दानेन प्रतिवासरम् । सुतेन जनता तेन, तातेन च समृध्यते ॥　७९

अप्यरातिशराघातजातव्रणनतोन्नते । वीरलक्ष्मीश्चिरं यस्य[2], वस्तुं वक्षसि वाञ्छति ॥　८०

वीरः समरकासारे, शिरोभिः सह वैरिणाम् । करीव पुण्डरीकाणि, कन्दयुक्तानि योऽग्रहीत् ॥　८१

अरातिराजन्यशराभिघातैः, प्रघात[3]भूमौ पतितोत्थितो यः ।
गम्भीरवीरेन्द्रबलाम्बुराशेर्लब्धे[4]र्गाधं पुनरुन्ममज्ज ॥　८२

अथैकदा कन्दलितप्रतापसन्तापिताशेषविपक्षपक्षः ।
निशावसाने न निशातबुद्धिः, प्राबुध्यत **श्रीलवणप्रसादः** ॥　८३

प्रबुद्धमात्रोऽपि **कुमारपुत्र**माकारयामास नृपावतंसः ।
पुरोधसे तत् किल रात्रिदृष्टं, शिष्टाय तस्मै विनिवेदयिष्यन् ॥　८४

समेत्य **सोमेश्वरदेव**नामा, नमस्य[5] ते[6] स्वस्ति निगद्य चास्मै ।
प्रसन्नमूर्तेः पुरतः स तस्य, दृष्टादरो विष्टरमाससाद ॥　८५

पुरस्कृतस्यास्य पुरः पुरारि[7]प्रसादलब्धं **लवणप्रसादः** ।
वीरेण तेनानुगतः सुतेन, तं स्वप्नमित्थं कथयाम्बभूव ॥　८६

जानेऽद्य विद्याधरसुन्दरीभिर्दरीगृहद्वारविहारिणीभिः ।
शृङ्गारितं शृङ्गमहं महाद्रे[8]रारूढवानूढवृषध्वजस्य ॥　८७

कृतासनं तन्मणिवेदिकायां, जायाङ्कितामर्धतनुं दधानम् ।
प्रसन्नवक्त्राब्जमहं सिताब्जैर्जगत्पतिं पूजयितुं प्रवृत्तः ॥　८८

विसृज्य पूजामथ मन्मथारेः, समाधि[9]मुद्रां विदधामि यावत् ।
तावत् पुरः[10] कामपि वामनेत्रां, राकामिवाऽऽकारवतीमपश्यम् ॥　८९

श्वेतांशुतुल्यं वदनं वहन्तीं, श्वेतांशुकां श्वेतविलेपनां ताम् ।
श्वेतां कराग्रे दधतीं च मालामालोक्य बाला[11]मतिविस्मितोऽस्मि ॥　९०

कस्यासि ? काऽसि ? त्वमिहासि कस्मादिति ब्रुवे यावदुपागतां ताम् ।
तावत् तयैवाभिहितोऽस्मि कान्तदन्तद्युता दत्तसितातपत्रः ॥　९१

हे वीर ! वैरिध्वजिनीगजेन्द्रगण्डस्थली[12]खण्डनखड्गचण्ड ! ।
प्रत्यर्थिसार्थेन कदर्थ्यमानां, जानीहि मां **गूर्जरराज्य[13]लक्ष्मीम्** ॥　९२

---

१ सः मु० ॥ २ °**स्य वासं वक्ष**° मु० ॥ ३ **प्रपात**° प्र० ॥ ४ °**लब्धावगा**° प्र० । °**लब्धैर-गाधं** मु० ॥ ५ वा० आदर्शे पदच्छेददर्शनद्वारा **नमस्यते** इति एकं पदं दर्शितमस्ति ॥ ६ तुम्यम् **प्र० टि०** ॥ ७ ईश्वर **वा० टि०** ॥ ८ कैलाश **प्र० टि०** ॥ ९ ध्यानम् **प्र० टि०** ॥ १० **पुनः** मु० ॥ ११ °**लामिति**° वा० ॥ १२ °**लीमण्डनखण्डचण्ड** वा० मु० ॥ १३ °**राजल**° मु० ॥

दिवं गतास्ते बत ! गूर्जरेन्द्रास्ते कुञ्जरेन्द्राश्च हताः सपत्नैः ।
येषां क्षमाभृद्दलनक्षमेषु, भुजेषु दन्तेषु च मे निवासः ॥ ९३

यो वर्तते सम्प्रति चक्रवर्तिपदेऽत्र बालः स बलान्यरीणाम् ।
क्षमः समग्राणि न निग्रहीतुं, दीपस्तमांसीव तटस्थितानि ॥ ९४

ये मन्त्रिणो येऽत्र च मण्डलीकास्तेषु क्रमो नास्ति पराक्रमोऽस्ति ।
प्रतिक्रिया काऽस्तु ततोऽस्ति येषां, कामो मयि स्वामिपरिग्रहेऽपि ॥ ९५

आस्ते सहस्तः स पुमान् न कोऽपि, यो मामिमामुद्धरते निमग्नाम् ।
ग्रहीतुमेते हि[२] सतां विभूतिं, शतं वितन्वन्ति नराः कराणाम् ॥ ९६

सौवस्तिको नास्ति स **आमशर्मा**, वर्मायितं येन सुधर्मगा मे ।
गतः स **मुञ्जालसुत**श्च[३] मन्त्रैर्यः क्षत्रसर्पानकरोद् विदर्पान् ॥ ९७

न **राष्ट्रकूटा**[४]न्वयकैटभारिः, **प्रतापमल्लो**ऽस्ति मृधैकमल्लः ।
गन्धोऽपि मत्तारिमतङ्गजानां, गन्धद्विपेनेव न येन सेहे ॥ ९८

विना **जगद्देव**मिमामवस्थां, नीता निजैरेव परैरिवाहम् ।
यत्र स्थिते वेत्रिणि शङ्कितैर्नै, द्विष्टैः प्रविष्टं **पुरि गूर्जरा**णाम् ॥ ९९

अवाप्तवेदाम्बुधिरोधसा च, पुरोधसा तेन **कुमार**नाम्ना ।
विनाऽद्य[५] **चैद्य**क्षितिपाललक्ष्मीं, को मे करिष्यत्यरः सपत्नीम् ? ॥ १००

या **मूलराजा**न्वयजातराजतेजोभिरासीद् विर[६]मत्तमस्का ।
निशागमे साम्प्रतमुद्वसायां, तस्यां न दीपोऽपि नरेन्द्रपुर्याम् ॥ १०१

निरन्तरं सञ्चरतां गजानां, या डिण्डिमैरुड्डमरा ध्वनद्भिः ।
एकाकिनी रात्रिषु **गूर्जराणां**, सा[७] पूत्करोतीव शिवारुतैः **पूः** ॥ १०२

क्रीडावतीनां नगराङ्गनानां, वक्त्रैः सदा यत्र सरोजसत्ता ।
सरस्तदश्रूणि किरत्यनाथं, वातास्तपाथःकणकैतवेन ॥ १०३

मुण्डेव खण्डितनिरन्तरवृक्षखण्डा, निष्कुण्डलेव दलितोज्ज्वलवृत्तवप्रा ।
दूरादपास्तविषया विधवेव दैन्यमभ्येति **गूर्जरधराधिपराजधानी** ॥ १०४

[८]तन्मां खचक्र-परचक्रहतावशेषां, निःशेषिताखिलसपत्न ! समुद्धरस्व ।
यस्मादमानवचरित्रपवित्रितेन, सम्भावनाऽत्र भवता भुवनेऽर्जिताऽसौ ॥ १०५

एकेन केशिरिपुणा विधृतं यदुच्चैर्भारेण भङ्गुरमिवासुरभूपतीनाम् ।
[९]तद्वीर ! **वीरधवलेन** सुतेन भूयः, सम्भूय भूवलयमुद्धर सम्प्रति त्वम् ॥ १०६

---

**१ हताः** प्र० वा० ॥ **२ तु** प्र० वा० ॥ **३ मुञ्जील**° मु० ॥ **४** राठउड **वा० टि०** ॥ **५** °द्य **वैद्य**° वा० ॥ **६** °**रजत्त**° मु० ॥ **७ सा फूत्क**° मु० ॥ **८ तस्मात् स्व**° मु० ॥ **९ तद्वीर !** वा० ॥

व्याहृत्य कृत्यमिति सा सहसा च कण्ठपीठे निवेश्य विशदामिह पुष्पमालाम् ।
कुत्रापि तत्र[1]भवती सह निद्रया मे, याताऽथ यूयमिह जल्पत नः[2] किमेतत् ? ॥ १०७

इत्थं वदन्नथ हरिप्रतिहस्तकोऽसौ, सौवस्तिकेन जगदे जगदेकवीरः ।
स्वप्नोऽयमर्थमक[3]दर्थ[4]नया ददानो, व्याख्यानमिच्छति भवानिव नैव देव ! ॥ १०८

राजन्य ! धन्यतममन्यमहं न मन्ये, प्रस्तो[5]रिवीरभुजवैभवतो भवत्तः ।
या न स्पृशत्युपनतानपरान् क[6]दापि, यत् त्वामुपेन्द्रमिव सा वृणुते स्वयं श्रीः ॥ १०९

युष्मादृशामसदृशान्वयसम्भवानां, न श्लाघ्यते जगति केन कुलार्गलाऽसौ ? ।
अग्रेसरीभवति दुश्चरितप्रवृत्तौ, या सङ्गरव्यतिकरापसृतौ तु पश्चात् ॥ ११०

उद्गच्छतस्तव रवेरिव सम्पराये, छायेव स[7]म्मुखमुपैति न शत्रुसेना ।
दीपाङ्कुरा इव दशान्तमुपेयिवांसस्तेजो निजं मुकुलयन्ति च मण्डलीकाः ॥ १११

आनीतवानसि गुणैर्गुरुभिः स्वकार्यैर्ब[8]द्ध्वा नृपश्रियमिमां सुभटोपभोग्याम् ।
सन्मन्त्रिभिस्तदनुरञ्जय मञ्जुमूर्ते !, व्यावर्तते नहि यथा त्वद[9]सौ स्थिताऽसौ ॥ ११२

दृप्यद्भुजाः क्षितिभुजः श्रियमर्जयन्ति, नीत्या समु[10]न्नयति मन्त्रिजनः पुनस्ताम् ।
रत्नावलीं जलधयो जनयन्ति किन्तु, संस्कारमत्र मणिकारगणः करोति ॥ ११३

पित्रा विचित्रचरितानुकृताऽच्युतेन, तेनाथ **वीरधवलो** बलवान् नियुक्तः ।
युक्तश्च भूभरसमुद्धरणे विधात्रा, चिन्तां चकार सचिवेषु शुचिक्रियेषु ॥ ११४

अथ दशरथकल्पस्त्यक्ततल्पः प्रभाते, स च नृपतिरपत्यं तच्च रामोपमेयम् ।
स च परिचरणीयो **गूर्जराणां** विशिष्टप्रतिकृतिरुदतिष्ठत् कर्म साध्यं विधातुम् ॥ ११५

**॥ इति गूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये नरेन्द्रवंशवर्णनो नाम द्वितीयः सर्गः ॥ २ ॥**



१ पूज्या **प्र० टि०** ॥ २ ना वा० ॥ ३ अकष्टेन **प्र० टि०** ॥ ४ °र्थतया मु० ॥ ५ °**रिवैरिभुजवैभवतो भवन्तः** वा० ॥ ६ **यदापि** वा० ॥ ७ **सन्मुख**° वा० ॥ ८ तथा **प्र० टि०** ॥ ९ °**दवस्थि**° मु० ॥ १० वर्द्धयति **प्र० टि०** ॥

# तृतीयः सर्गः ।

---

## वस्तुपालवंशवर्णनम्

रसालङ्करणे तस्मिन्नालवालानुकारिणि । प्रांशुः **प्राग्वाट**वंशोऽभूत्, **पुरे गूर्जरभूभुजाम्** ॥ १

त्वचि साराः परे वंशाः, सदा पत्राणि बिभ्रति । क्रियासारैश्च वंशोऽयं, धत्ते पात्रपरम्पराम् ॥ २

नररत्नैर्यदुत्पन्नैरुद्भूताद्भुत[2]कान्तिभिः । विभूषिता विशेषेण, जगतीव सरस्वती ॥ ३

मन्त्रिमण्डलमार्तण्ड**श्चण्डपः** प्रथमः पुमान् । कुले तस्मिन्नुदेति स्म, [3]तमसामव[4]सानकृत् ॥ ४

[5]चाणक्यादिव चातुर्यं, गिरमाङ्गिरसादिव । अम्भोधेरिव गाम्भीर्यं, यः शुभैकाग्रहोऽग्रहीत् ॥ ५

न च्छिद्रं क्षुद्रमप्यत्र, मन्त्रि[6]रत्ने निवेशितम् । धात्रा के[7]न प्रकारेण, सोऽनुस्यूतगुणः कृतः ? ॥ ६

मानी नामन्यत श्लाघ्यां, यः श्रियं सरसीरुहाम् । यैर्मनागपि न म्लानमि[8]नपादावधीरितैः ॥ ७

तद्भू**श्चण्डप्रसादो**ऽभूद्, गङ्गाडिण्डीरपाण्डुभिः । यशोभिः ककुभां येन, चक्रे श्रीखण्डमण्डनम् ॥ ८

कदाचिदपि न त्यक्तः, पाणिपद्मगृहीतया । गेहिन्येव वदान्योऽयं, नृपव्यापारमुद्रया ॥ ९

मृदुर्वाणी मतिस्तीक्ष्णा, साधुः श्रीः कीर्तिरित्वरी । वीतरागं मनो यस्य, स्फीतरागं करद्वयम् ॥ १०

यः पराभूतकर्पूरैः, कीर्तिपूरैर्निरन्तरम् । चिरं विरचयामास, राकामाकालिकीमिह ॥ ११

**सोमः** समुद्रतस्तस्मादुज्जगाम मनोरमः । सवित्री जातमात्रेण, येन द्यौरिव दिद्युते ॥ १२

अपूर्वः कोऽपि सोमोऽयं, कलङ्कविकलाकृतिः । न हि मारं पुरस्कारं, चक्रे भावं च नो भवे ॥ १३

निदधे गुणरत्नानां, यत्र कोशः स्वयम्भुवा । तत्र श्री**सिद्धराजो**ऽपि, रत्नकोशं न्यवीविशत् ॥ १४

स्वं मेने येन **सोमेन**, पूर्णेनाभ्यर्णवर्तिना । गृहीतानन्तभोगः [12]श्री**सिद्धेशो**ऽधिकमीश्वरात् ॥ १५

[13]सावित्रं बिभ्रता तेजः, **सीतां** च सहचारिणीम् । काकुत्स्थेनेव येनापि, न दीनातिक्रमः कृतः ॥ १६

अमेयमहिमा श्रीमान**श्वराज**स्ततोऽभवत् । येन दानार्द्रहस्तेन, हस्तिराजोऽप्यजीयत ॥ १७

तस्मान्निरन्तरत्यागस्थगिताश्रितदुःस्थितैः । [15]निर्जरैरेवेन्द्रियैर्लब्धा, कामना न मनागपि ॥ १८

आनीतं न्यायतो वित्तं, व्ययितं धर्मकर्मसु । यशस्तु जगति स्तुत्यं, केवलं यस्य तिष्ठति ॥ १९

प्राकृतां रेणुकाबाधां, स्मरन्ननुशयादिव । मातुर्विशेषतश्चक्रे, भक्तिं यः पुरुषोत्तमः ॥ २०

जनन्या जठरे मासानध्युवास दशैव यः । हृदयाम्भोरुहे तस्य, यावज्जीवमियं पुनः ॥ २१

---

१ °**रस्थवं**° प्र० वा० ॥ २ इच्छा तेजश्च **प्र० टि०** ॥ ३ तमसां दुष्टानाम् **प्र० टि०** ॥ ४ अन्त **प्र० टि०** ॥ ५ **चाणिक्या**° वा० ॥ ६ °**त्ने न्यवेशयत् । धात्रा(ता) के**° मु० ॥ ७ तथापि **प्र० टि०** ॥ ८ इनः–सूर्यः, पाद–किरणाः, अवधीरित–अवगणित, अनस्वामीपादैः **प्र० टि०** ॥ ९ अकालभवाम् **प्र० टि०** ॥ १० मरणं कामश्च **प्र० टि०** ॥ ११ भवः–संसारः शिवश्च **प्र० टि०** ॥ १२ **श्रीसमिद्धः सोऽधिक**° वा० । **श्रीसमिद्धोऽधिक**° मु० ॥ १३ सवित्र्या इदं सवितुरिदम् **प्र० टि०** ॥ १४ **यस्मा**° प्र० ॥ १५ **निर्जैरिवे**° मु० ॥ १६ °**गत स्तु**° प्र० ॥ १७ चक्रवर्ती **प्र० टि०** ॥ १८ **यस्य** प्र० ॥

सततं सचिवश्रेणिमाणिक्यस्याङ्गसङ्गिनी । कान्ता **कुमारदेवी**ति, तस्य कान्तिरिवाभवत् ॥ २२

स्वाभाविकेन शौचेन, मान्याः सुमनसामपि । प्रवाहा इव जाह्नव्यास्तया सूताः सुतास्त्रयः ॥ २३

मुख्यः श्री**मल्लदेवा**ख्यो, **वस्तुपाला**ह्वयस्ततः । **तेजःपाला**भिधः पश्चात्, त्रयी भाति त्रयीव सा ॥ २४

पुरुषाणामिमास्तेषां, परेषामिव मूर्तयः । त्रिधा विभिद्यमाना अप्येकैव परमार्थतः ॥ २५

स्वयं शुद्धेषु यत् तेषु, गुरुणा शौचशिक्षणम् । घनसारपरागेण, मार्जनं मौक्तिकेषु तत् ॥ २६

तैल्लब्धं **मल्लदेवेन**, यशः शुभ्रं विभाव्य यैत् । शिष्टैर्न विष्टपे दृष्टं, कैरवं कैरवज्ञया ? ॥ २७

इयती **मल्लदेवस्य**, कौस्तुभेन विभिन्नता । जिनो हृदि यदेतस्य, जिनस्य त्वपरः सदा ॥ २८

वस्तुत्वं **वस्तुपालस्य**, सैव वेत्ति सरस्वती । तदीयवदनाम्भोजे, या वसत्यनुवासरम् ॥ २९

स्थितं पुरुषयोर्मध्ये, पूर्वजानुजयोस्तयोः । मन्यते मध्यमं यः स्वमुत्तमं तं जनः पुनः ॥ ३०

किमस्तु **वस्तुपालस्य**, मन्त्रीन्दोः साम्यमिन्दुना ? । यद् दत्ते वसुधामेष, सुधामेवापरः पुनः ॥ ३१

वृद्धिं न्यग्रोधशाखीव, स प्राप्नोति यथा यथा । क्षमालङ्करणः केषां, नाश्रयः स्यात् तथा तथा ? ॥ ३२

षड्भिरेव गुणैर्येन काऽपि कीर्तिपटी कृता । वसुन्धरा धराऽम्भोधिसहिता विहिता यया ॥ ३३

मन्ये मनसि साधूनां, यो वसत्यनुवासरम् । यदनुक्तोऽपि जानीते, विधत्ते च तदीप्सितम् ॥ ३४

अहङ्करोति नात्मानं, त्वङ्करोति न सद्गुरून् । यः पुनः प्रधनारम्भे, हुङ्करोति विरोधिनः ॥ ३५

दयिता **ललितादेवी**, यस्य सर्वाङ्गहारिणी । अर्धाङ्गहारिणीं पत्युः, पार्वतीं हसतीव या ॥ ३६

तस्मादमात्यजीमूतात्, सुक्षेत्रेऽस्मिन् सुताङ्कुरः ।
**जयसिंहा**ह्वयः सोऽयं, बालोऽपि फलितः सताम् ॥ ३७

पूर्वे सर्वेऽपि तार्यन्ते, निस्तार्यन्ते तथाऽर्थिनः । एतेन यस्य पोतेन, प्रतार्यन्ते न तु प्रजाः ॥ ३८

**तेजःपालः** पुनस्तेषु, सोदरेषु लघुः किल । निजप्रभुप्रसादेन, गुरुणाऽपि न लङ्घ्यते ॥ ३९

छन्दःशास्त्रे श्रुताऽस्माभिर्लघुताऽपि क्वचिद् गुरोः । तस्मिन् बन्धुजने दृष्टा गुरुताऽस्य लघोरपि ॥ ४०

**अश्वराजा**त्मजावेतौ, नासत्यावमृतौषधैः । सम्प्रति प्रतिकुर्वाते, सर्वमप्यातुरं जगत् ॥ ४१

अमी सुमनसस्तेन, स्पर्धन्तामुद्धताः कथम् ? । सोऽपि सद्बुद्धिना येन, जितः सुमनसां गुरुः ॥ ४२

अपूर्वं तस्य वैदुष्यं, यद् दिक्पालैः स्वभूभुजा । समानैर्दशभिः सार्धं, मेने सन्ध्यक्षराणि यैः ॥ ४३

शुभस्वभावमालोके, लोकेऽस्मिन्नेकमेव तम् । यदुक्तं तत् करोत्येव, यत् कृतं तन्न वक्ति यः ॥ ४४

उपकृत्य कृती पुंसां, वित्ते तेषां न केवलम् । अपि यः स्तुतिलब्धायां, सचिवेन्दुर्गतस्पृहः ॥ ४५

उपकर्ता सतामन्यैरुपकारयिता च यः । हरते हि मरुत् तापं, हारयत्यपि वारिदैः ॥ ४६

वात्ययेवोन्नतिं नीतः, श्रिया तृणसमः पुमान् । क्षमां त्यजति न त्वेष, शिखरीवोदयन्नपि ॥ ४७

अपूर्वं मन्त्रिमाणिक्यं, चाणक्यमिह मन्महे । वसुधावलये येन, सदानन्दोदयः कृतः ॥ ४८

यद्यप्यनुपमा नाम, प्रेयसी तस्य मन्त्रिणः । मूर्त्या तथापि मन्येऽहमेनां मेनाङ्गजामिव ॥ ४९

**लावण्यसिंह**नामानं, सा लावण्यवतंसिता । तनयं जनयामास, विनयावर्जितप्रजम् ॥ ५०

---

१ शौर्येण, मा° मु० ॥ २ यल्लु° मु० ॥ ३ तत् मु० ॥ ४ यत् मु० ॥ ५ °कृत्ये मु० ॥ ६ °सचिवो दुर्ग° मु० ॥ ७ चाणिक्य° वा० ॥ ८ °सिनम् मु० ॥

**वस्तुपाल-तेजःपालयोः मन्त्रिमुद्रार्पणम्**

भूमिभर्तुरथ कर्तुमिच्छतस्तस्य सत्पुरुषसङ्ग्रहं श्रिये ।
एकदा हृदयमागताविमौ, दीप्तशीतकरणाविवाम्बरम् ॥ ५१
तद्गुणान् निपुणया मनीषिणामग्रणीर्धिषणया विमृश्य सः ।
आजुहाव च समागतौ च तौ, कार्यसिद्धिरविलम्बिनी सताम् ॥ ५२
तत्र तौ ददृशतुः शतक्रतुप्रायमायतभुजं महीभुजम् ।
सानुजं च सचिवं स दृष्टवानर्थजुष्टमिव धर्ममग्रतः ॥ ५३
तावुपायनमुपायपण्डितौ, मण्डितौजसिकपद्धतेः पुरः ।
उद्गणय्य¹ चरणद्वयं मुदा, तस्य वीरतरणेः प्रणेमतुः ॥ ५४
तेन वैनतनयानुकारिणा, कर्तुमात्मकरणाधिकारिणौ ।
सप्रसादवदनेन सादरं, सोदरौ समुपवेशिताविमौ ॥ ५५
तस्य निर्दलितभूरिभूभृतः, स्वर्पतिप्रतिकृतेः² कृतासनौ ।
अश्वराजतनुजौ रराजतुस्तौ सुरा-ऽसुरगुरूपमौ पुरः ॥ ५६
एतयोर्विनयनम्रमस्तकन्यस्तसम्पुटितपाणिपद्मयोः ।
निर्ममे समदशत्रुदन्तिनामङ्कुशः स कुशलानुयोजनम् ॥ ५७
नीलनीरदरवानुवादिना, नादयन्नथ दिशः स्वरेण सः ।
तौ पुनश्चरितचातकव्रतौ, वक्तुमारभत मारसन्निभः ॥ ५८

आकृतिर्गुणसमृद्धिशंसिनी, नम्रता कुलविशुद्धिसूचिका ।
वाक्क्रमः कथितशास्त्रसङ्क्रमः, संयमश्च युवयोर्वयोऽधिकः³ ॥ ५९
श्लाघ्यतां कुलमुपैति पैतृकं, स्यान्मनोरथतरुः फलेग्रहिः ।
उन्नमन्ति यशसा सह श्रियः, स्वामिनां च पुरुषैर्भवादृशैः ॥ ६०
यौवनेऽपि मदनान्न विक्रिया, नो धनेऽपि विनयव्यतिक्रमः ।
दुर्जनेऽपि न मनागनार्जवं, केन वामिति नवाकृतिः कृता ? ॥ ६१
आवयोस्तु पितृ-पुत्रयोर्महानाहितः क्षितिभरः पुरद्रुहा ।
तद् युवां सचिवपुङ्गवावहं, योक्तुमत्र युगपत् समुत्सहे ॥ ६२
विद्युदञ्चलचलाचलां⁴ श्रियं, सन्निवेश्य सचिवेषु साधुषु ।
सम्प्रहारभरसम्भृतश्रमाः, शेरते सुखममी क्षमाभुजः ॥ ६३
येन केन⁵ च सुधर्मकर्मणा, भूतलेऽत्र सुलभा विभूतयः ।
दुर्लभानि सुकृतानि तानि यैर्लभ्यते पुरुषरत्नमुत्तमम् ॥ ६४
मत्पितुर्भुजयुगेन संयुगादाहृतां जितयुगश्रिया श्रियम् ।
अक्षरक्षणविचक्षणौ⁶ युवां, नित्यमेधयतमिद्धया धिया ॥ ६५

---

१ उड्डुण° प्र० ॥ २ स्वःष्पति वा० । स्वःपति° मु० ॥ ३ °वयं, यो° मु० ॥ ४ °चलश्रि° वा० मु० ॥ ५ केनचन धर्म° प्र० ॥ ६ व्यवहार प्र० दि० ॥

इत्युदीर्य भुजवीर्यशालिना, मुद्रिता दशनचन्द्रिकाऽमुना ।
वस्तुपालवदनारविन्दतः, स्यन्दते स्म मधु वाग्मयं ततः ॥ ६६

देव ! सेवकजनः स गण्यते, पुण्यवस्तु गुणवस्तु चाग्रणीः ।
यः प्रसन्नवदनाम्बुजन्मना, स्वामिना मधुरमेवमुच्यते ॥ ६७

सप्रसादवदनस्य भूपतेर्यत्र यत्र विलसन्ति दृष्टयः ।
तत्र तत्र शुचिता कुलीनता, दक्षता सुभगता च गच्छति ॥ ६८

जायते जलदवृन्दवृष्टिभिः, शाखिनां सफलता शनैः शनैः ।
तुष्यतां क्षितिभृतां नु दृष्टिभिस्तत्क्षणादपि नृणां फलोदयः ॥ ६९

नास्ति तीर्थमिह पार्थिवात् परं, यन्मुखाम्बुजविलोकनादपि ।
नश्यति द्रुतमपायपातकं, सम्पदेति च समीहिता सताम् ॥ ७०

जीवनाय मनुजन्मनामिह, भ्राम्यतामथ कदापि स प्रभुः ।
त्वादृशो भवति भाग्ययोगतो, वेत्ति यः सदसतां यदन्तरम् ॥ ७१

किन्तु विज्ञपयिताऽस्मि किञ्चन, स्वामिना तदवधार्यतां हृदा ।
न्यायनिष्ठुरतरा गिरः सतां, श्रोतुमप्यधिकृतिस्तवैव यत् ॥ ७२

सा गता शुभमयी युगत्रयी, देव ! सम्प्रति युगं कलिः पुनः ।
सेवकेषु न कृतं कृतज्ञता, नापि भूपतिषु यत्र दृश्यते ॥ ७३

ते राजानः स्वर्गताश्चक्रिरे यैर्वी रैर्वै रिक्ष्मापतीनां प्रबन्धाः ।
तेऽपि प्राप्तास्तत्र सन्मन्त्रिणो ये, श्लोकांस्तेषां शोधयन्ति स्म शुद्धाः ॥ ७४

दृष्टिर्नष्टा भूपतीनां तमोभिस्ते लोभान्धान् साम्प्रतं कुर्वतेऽग्रे ।
यैर्नीयन्ते वर्त्मना तेन यत्र, भ्रश्यन्त्याशु व्याकुलास्तेऽपि तेऽपि ॥ ७५

न सर्वथा कश्चन लोभवर्जितैः, करोति सेवामनुवासरं विभोः ।
तथापि कार्यः स तथा मनीषिभिः, परत्र बाधा न यथाऽत्र वाच्यता ॥ ७६

पुरस्कृत्य न्यायं खलजनमनादृत्य सहजानरीन् निर्जित्य श्रीपतिचरितमाश्रित्य च यदि ।
समुद्धर्तुं धात्रीमभिलषसि तत् सैष शिरसा, धृतो देवादेशः स्फुटमपरथा स्वस्ति भवते ॥ ७७

सचिववचनमेतच्चेतसा सोत्सवेन, क्षितितलतिलकोऽयं कर्ण्यमाकर्ण्य सम्यक् ।
अकृत कनकमुद्राकान्तिकिञ्जल्कसान्द्रं, करसरसिजयुग्मं मन्त्रियुग्मस्य तस्य ॥ ७८

अवनिपतिरनेन भूरिधाम्ना, सचिवयुगेन चिराद् विराजमानः ।
पतगपतिरिवारिनागनाशं, जनयति पक्षयुगेन संयुगे सः ॥ ७९

**॥ इति श्रीगूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये मन्त्रप्रतिष्ठा नाम तृतीयः सर्गः ॥**



---

१ वाङ्मयं वा० मु० ॥ २ °नां फललता प्र० ॥ ३ °रैर्वीरक्ष्मा° वा० मु०. ॥ ४ °जितं वा० ॥ ५ धात्रीं समभिलषसि तच्चैष वा० ॥ ६ °ऽयं कृत्स्नमा° मु० ॥ ७ मन्त्रिस्थापना नाम वा० । मन्त्रिस्थापनो नाम मु० ॥

## चतुर्थः सर्गः ।

**वस्तुपालस्य मन्त्रित्वावदाताः**

**श्रीवीरस्य** धरोद्धारधुरीणस्योपधारणम् । चक्रतुः सचिवावेतौ, पादौ सुरगिरेरिव ॥ १
ताभ्यां कल्याणरूपाभ्यां मन्त्रिभ्यामधिकाधिकम् । नृपाखण्डलराज्यश्रीः, कुण्डलाभ्यामिव व्यभात् ॥ २
न्यायं निवेशयन्नुर्व्यां, निर्व्याजः स्वजनः सताम् । **स्तम्भतीर्थं** जगाम श्री**वस्तुपालो** विलोकितुम् ॥ ३
**स्तम्भतीर्थे** स्थितस्तीर्थप्रभाव इव मूर्तिमान् । केषां मुमोष नो दोषमीप्सितानि ददौ च यः ॥ ४
तमन्यमिव सश्रीकं, समुद्रमवलोकयन् । ईर्ष्ययेव पयोभङ्गैर्भ्रूभङ्गं विदधेऽम्बुधिः ॥ ५
कोऽप्यपूर्वः समुद्रोऽयमपापः पृथिवीतले । यस्मात् प्रसरति स्वादुरसपूरा सरस्वती ॥ ६

प्रविवेश पुरे तत्र, स पश्चान्मन्त्रिसत्तमः । तस्याऽऽगमे तु पौराणां, प्रमोदः प्रथमं हृदि ॥ ७
हट्टे हट्टे पटोत्तम्भस्तोरणं च गृहे गृहे । पुरुषे पुरुषे प्रीतिः, सम्प्राप्ते तत्र मन्त्रिणि ॥ ८
धान्यैर्धन्यमिव क्षेत्रं, फलैरिव घनं वनम् । सरः पूर्णमिवार्णोभिस्तेनाऽभूच्चारु तत् पुरम् ॥ ९

क्रूरैर्ग्रहैरिवाऽऽक्रम्य, मुक्तमन्यैर्नियोगिभिः । प्रीणात्येष पुरं मन्त्री, नक्षत्रमिव चन्द्रमाः ॥ १०
पुरं रोगैरिव ग्रस्तमपरैरधिकारिभिः । सद्वैद्य इव तन्त्रज्ञो, मन्त्री प्रतिकरोति यः ॥ ११
केनाऽप्यन्येन या चक्रे, सतां पीडाऽधिकारिणाम् । वार्यते **वस्तुपालेन**, सा सम्प्रत्यधिकारिणा ॥ १२

प्रत्यावृत्तिः कृतस्येव, कलेरिव गलग्रहः । बलेः पुनरिवोत्थानं, स मेने सुमनःशतैः ॥ १३
निशासु नीचसम्भोगसम्भूतधनकामना । सत्यत्र मन्त्रिमाणिक्ये, गाणिक्येनापि तत्यजे ॥ १४
सर्वत्रोच्छ्वसितं सद्भिः, खलानां म्लानमाननैः । निराकृतदुराचारं, व्यापारं तत्र तन्वति ॥ १५
सांयात्रिकजनो येन, कुर्वाणो हरणं नृणाम् । निषिद्धस्तदभूदेष, धर्मोदाहरणं भुवि ॥ १६
स्पृष्टा-ऽस्पृष्टनिषेधाय, विधायावधिवेदिकाम् । पुरेऽस्मिन् वारितस्तेन, तक्रविक्रयविप्लवः ॥ १७

धात्रा स्थानेषु भग्नेषु, ताम्यतामाश्रयः सताम् । सद्वंशः सद्गुणश्चायं, पटावास इवाभवत् ॥ १८
स्वामिना सुप्रसादेन, पाणिर्यद्यपि मुद्रितः । तथाऽप्युन्मुद्रितस्तस्य, वित्तविश्राणनक्षणे ॥ १९
स्निग्धैः सम्भाषणैरेव, यस्य द्रविणवर्षिणः । अर्थिनामुपशाम्यन्ति, दौःस्थ्यनिःश्वासवायवः ॥ २०
स्थानभ्रष्टस्य यः साधोराधारः सारवत्तया । जटाजूटः सुरस्रोतःप्रवाहस्येव शाम्भवः ॥ २१
लोकेऽस्मिन्नवमन्वाने, जाने वैराग्यमागताः । सरस्वत्यास्पदं तीर्थमिव यं शिश्रियुर्गुणाः ॥ २२

महतां वर्त्तमानानां वित्तेनोपकरोति यः । स्वर्गतानां जर्त्पूर्तकीर्तनोद्धरणेन तु ॥ २३
प्रासादास्तेन देवानामुद्धृताः कारिताश्च ये[९] । नवत्वमेव विख्यातमसङ्ख्येष्वपि तेष्वभूत् ॥ २४

---

१ °रूपिभ्यां मु० ॥ २ व्यधात् मु० ॥ ३ °जः सुमनः वा० । °जः सुजनः प्र० ॥ ४ तद्वैद्य प्र० वा० ॥ ५ °रिण प्र० मु० ॥ ६ सत्प्रसा° मु० ॥ ७ °तां विद्यमाना° मु० ॥ ८ °र्त्कीर्तिकी° वा० ॥ ९ ते प्र० वा० ॥ १० येष्व° प्र० ॥

कीं० ३

यन्न्यूनं यत्र यन्नष्टं, यस्तत्र तदचीकरत् । उत्पत्तिरुत्तमानां हि, रिक्तपूरणहेतवे ॥ २५
अकल्पयदनल्पानि, देवेभ्यः काननानि यः । हरनेत्राग्नितापस्य, यत्र न स्मरति स्मरः ॥ २६
रम्भासम्भावितैर्यस्य, वनैर्वृषनिषेवितैः । मनोज्ञसुमनोवर्गैः, स्वर्गसौन्दर्यमाददे ॥ २७
सङ्गृहीतानि हारीत-शुक-चित्रशिखण्डिभिः । धर्मशास्त्रसधर्माणि, यस्योद्यानानि रेजिरे ॥ २८
दर्शयन् सुमनोभावं, श्रीमत्तामतुलामयम् । काननानां स्वबन्धूनां, स्वबन्धूनामिवाऽकरोत् ॥ २९
सरांसि राजहंसालीशालीन्ययमचीखनत् । तेनैव तुल्यता येषां, स्यादस्ताघतया तया ॥ ३०
आददानाः पयःपूरं, यत्कासारेषु कासराः । विराजन्तेतरां पारावारेष्विव पयोधराः ॥ ३१
अकारयदयं वापीरपापीयःक्रियारतः । सुधाया अपि माधुर्यं, यज्जलैर्गलहस्तितम् ॥ ३२
ताः प्रपाः कारितास्तेन, यदीयं पिबतां पयः । तृप्यन्त्यास्यानि पान्थानां, न रूपं पश्यतां दृशः ॥ ३३
भवार्णवतरी **ब्रह्मपुरी** येनात्र निर्ममे । यस्यां गायन्ति सामानि, नरा नार्यस्तु तद्यशः[2] ॥ ३४
स्फुटं वेष्टयता शुभ्रैः, कीर्तिकूटैः पटैरिव । दशाऽपि ग्राहिता येन, दिशः श्वेताम्बरव्रतम् ॥ ३५
येन पौषधशालास्ताः, कारितास्तारितात्मना । मध्ये श्वेताम्बरैर्यासां, विशुद्धिः सुधया बहिः ॥ ३६
यस्य पौषधशालासु, यतयः संवसन्ति ते । सदा येषामदाराणामात्मभूसम्भवः[3] कुतः ? ॥ ३७
ज्ञानाख्यं यस्य तच्चक्षुर्वाचांदेवी ददे मुदा । नित्यं येनैष धर्मस्य, गतिं सूक्ष्मामपीक्षते ॥ ३८
अयं जगति मध्यस्थः, स्पष्टं सृष्टिकृता कृतः । धर्माध्वानस्तदेतस्य, स्थिताः सर्वेऽपि तावति ॥ ३९
नानर्च भक्तिमान् **नेमौ**, नेमौ शङ्कर-केशवौ । जैनोऽपि यः सवेदानां, दानाम्भः कुरुते करे ॥ ४०
लभन्ते लोक[4]तः पापाः, शापानन्ये नियोगिनः । अधिकारमधिकारममात्यः पात्यसौ पुनः ॥ ४१

### सिंहनराजस्य गूर्जरदेशोपरि अभियोगः

अथ **गूर्जरराज**राज्यलक्ष्मीं, रमणीयां चरचक्षुषा निरीक्ष्य ।
पृतनां द्रुतमादिदेश दूतीमिव तत्सङ्ग्रहणाय **दक्षिणेन्द्रः** ॥ ४२
श्रु[5]त**सिङ्घन**सैन्यसिंहनादप्रसरा **गूर्जरराज**राजधानी[6] ।
हरिणीव हरिन्मुखावलोकं, चकितान्तःकरणा मुहुश्चकार ॥ ४३
गृहमारभते न कोऽपि कर्तुं, कुरुते कोऽपि न सङ्ग्रहं कणानाम् ।
स्थिरतां क्वचनापि नैति चेतः, परचक्रागमशङ्कया प्रजानाम् ॥ ४४
अवधीरितधान्यसञ्चयानां, बहुमानः शकटेषु मानवानाम् ।
विपदामुदये हि दुर्निवारे, शरणं चक्रभृदेव देहभाजाम् ॥ ४५
समुपैति यथा यथा समीपं, रिपुराजध्वजिनी मदात् तदानीम् ।
परतः परतस्तथा तथाऽसौ, जनता जातभयोच्छ्रया प्रयाति ॥ ४६
तदवेत्य जवेन **यादवेन्दो**र्बलमागच्छदतुच्छवीर[7]वर्गम् ।
भृकुटीकुटिलं चकार कोपादलिकं श्री**लवणप्रसाददेवः** ॥ ४७

---

१ °**दनेकानि** मु० ॥ २ **यद्यशः** वा० ॥ ३ °**वः कथम् ?** प्र० । अत्र **कथं**पदोपरि **प्र०** आदर्शे **कुतः** इति टिप्पणी कृता वर्त्तते ॥ ४ **लोभतः** वा० मु० ॥ ५ **श्रीसिङ्घन**° प्र० ॥ ६ °**राद् गू**° प्र० ॥ ७ °**रगर्वम्** मु० ॥

उपकण्ठमकुण्ठविक्रमस्य, स्फुरदुस्रप्रसरो[1] हरिण्मयी स्रक् ।
शुशुभेऽस्य **चुलुक्यभूप**लक्ष्म्या[2], मयवत्या निहितेव बाहुवल्ली ॥ ४८

परिपन्थि[3]वैरूथिनीं प्रभूतां, स नृपस्तुच्छपरिच्छपरिच्छदोऽप्यगच्छत् ।
बलिनाऽप्यरिणा रणप्रवृत्तौ, सुभटानां हि पदानि [4]सम्मुखानि ॥ ४९

बलवारिधिराजगाम शत्रोरुप**तापी**तटमुर्वरोपतापी ।
रभसादभिधावति स्म **वीरः**, स **मही**तीरमहीनबाहुशक्तिः ॥ ५०

प्रचुरं तदरातिराजचक्रं, तदजय्यं च बलं **चुलुक्यभर्तुः** ।
विमृशन् बहुशोऽपि सन्दिहानो, न जनो निश्चिनुते स्थितिं गतिं वा ॥ ५१

रिपुसैन्यनिवेशभूः प्रजानां, विदिताऽभूदनिवेदिताऽपि दूतैः ।
गगनाङ्गणगाहनोल्बणैस्तज्ज्वलितग्रामसमूहधूमकूटैः ॥ ५२

**भृगुकच्छ**महीमहीनसस्यां, चरतस्तानचिरेण वृष्णिवर्गान् ।
न बहूनपि दुर्जयानजय्यः, समरेऽमन्यत वीरकेसरी सः ॥ ५३

प्रसरत्यथ मत्सरप्रबन्धे, द्रुतमेकेन रणोल्बणं कृपाणम् ।
अपरेण सुतं करेण **वीरं**, सहसा संयति यान्तमेष दध्रे ॥ ५४

**चतुर्णां मरुभूपानां लाट-गोद्रहनृपयोश्च गूर्जरत्रोपर्यभियोगः**

क्षितिपान्तरविग्रहप्रसक्तौ, पितृ-पुत्रावथ विग्रहीतुमेतौ ।
विदितावसरैश्चिराच्चतुर्भि**र्मरुभूपैः** सहसोपचक्रमाते ॥ ५५

उभयोरनयोश्चतुर्भिरेभिर्विगृहीतिर्विहिताऽथ साऽपि पृष्ठे ।
इयतैव बुधैर्वि[5]भवनीयं, सुभटत्वं मृधमूर्ध्नि यस्य यावत् ॥ ५६

अथ **गोद्रह-लाट**देशनाथौ, **मरुना**थैर्निभृतं निबद्धसन्धी ।
विधुरे परिहृत्य तत्र मित्रद्वितयं [6]तत्कटकादुपेयतुस्तान् ॥ ५७

असतोरबलं तयोः सतोर्वा, सबलं स्वं मनुते स्म नैष वीरः ।
जलधिर्विगतैरुपागतैः स्यान्नहि[7] भिद्योद्धचजलैः क्षयी चयी वा ॥ ५८

पुरतो यदि **सिङ्घनस्य** सैन्यं, यदि पृष्ठे **मरुभूभुज**श्च तौ च ।
न बभूव तयोरचिन्त्यशक्त्योर्मुखरागस्य विपर्ययस्तथाऽपि ॥ ५९

पुरतः सरतो **यदुप्रवीरा**ननुगच्छन् समरे करीव[8] मत्तः ।
व्यथितः प्रतिपार्थिवैः स पश्चात्, सपदि व्याववृते नृपः सकोपः ॥ ६०

जगति ज्वलिताखिलप्रदेशः, प्रचुरीभूतमलिम्लुचप्रचारः ।
स परस्परविग्रहो ग्रहणामिव तेषामभवन्नरेश्वराणाम् ॥ ६१

---

१ °रा हिरण्म° मु० ॥ २ क्ष्म्या, वलयत्या वा० ॥ ३ °विरू° प्र० वा० ॥ ४ सन्मुखा° प्र० वा० ॥ ५ °विबोधनी° मु० ॥ ६ यत्क° मु० ॥ ७ °हि नद्योघजलैः प्र० । भिद्य उद्धय इति एतन्नामानौ द्वौ महानदौ ॥ ८ °व सत्तमः । व्य° वा० ॥

अवलोक्य **चुलुक्यपार्थिवौ** तौ, विपरीतैर्बहुभिर्नृपैः परीतौ ।
खर-शीतकराविवाम्बुवाहैर्जनतेयं मनुते स्म दुर्दिनं तत् ॥ ६२

वलितेऽपि **चुलुक्यपार्थिवे**ऽस्मिन्, न कृतं तैर्यदुभिः पुरः प्रयाणम् ।
हरिणैरनुगम्यते न मार्गो, हरिणा तत्क्षणमाश्रितोज्झितोऽपि ॥ ६३

हरितं परिहृत्य चन्दनाद्रेरथ गन्तुं हिमभूभृतः प्रवृत्तः ।
अभवल्लवण**प्रसाद**शूरः, प्रसरत्तीव्रतरप्रतापरौद्रः ॥ ६४

सहजा इति येषु बन्धुबुद्धिः, प्रथमाऽभूदथ तान् विकारकर्तॄन् ।
षडपि द्विषतो विमृश्य जेतुं, नृपवीरः स पुरश्चकार योगम् ॥ ६५

## वस्तुपालस्य भेदनार्थं शङ्खराजेन दूतस्य प्रेषणम्

प्रसृतेऽथ महीक्षितां विरोधे, क्षयसिन्धाविव **सिन्धुराजसूनुः** ।
प्रणिधिं प्रणिधाय मन्त्रिणेऽस्मै, तृणवद् विश्वमपि स्मयेन पश्यन् ॥ ६६

**चुलुकोद्भव**भूपतेरमात्यं, भयकालेऽपि निराकुलं तमेत्य ।
प्रणिधिः प्रणिपत्य च प्रवीणो, विनयैश्छन्नमदामुवाच वाचम् ॥ ६७

सुभटैरपरैर्विमुक्तमस्त्रं, समरोर्वीषु य एक एव धत्ते ।
अथवा भुवने निराश्रयाणां, शरणं किन्नु तथाविधैर्विनाऽस्तु ? ॥ ६८

दलितेऽपि दले स्थितः समित्यां, **यदुभिर्यो** बहुभिर्धृतः कथञ्चित् ।
हृदयेषु गुणार्जितेषु तेषामपरेषामपि विश्रमं जगाम ॥ ६९

विधृतेऽपि सुतेऽत्र तत्सवित्री, न सपत्राकृतमानसा तथाऽभूत् ।
समरे हि भयङ्करेऽपि व्यक्तः, समसत्त्वेन न येन लज्जिताऽसौ ॥ ७०

अवलोकितमात्र एव गुर्तैर्यदुसिंहेन विमोच्य **सिंहनेन** ।
निदधे भुजपञ्जरे स्वयं यः, क्व लभन्ते गुणिनो हि न प्रतिष्ठाम् ? ॥ ७१

विधुरेऽपि न मुञ्चते निजं यः, कुलधर्मं च कुलान्वयप्रदीपः ।
स यदाह मदाननेन **शङ्खः**, शृणु तन्मन्त्रिशिरोमणे ! स्वपथ्यम् ॥ कुलकम् ॥ ७२

विषमेऽपि कथं स कृत्यमार्गे, स्खलतु श्री**लवणप्रसादपुत्रः** ? ।
प्रददाति पदे पदे प्रबुद्धः, सचिवो यस्य भवान् करावलम्बम् ॥ ७३

निपुणोऽसि गुणेषु षट्सु जाने, पुनरेषा तव धीरता कुतस्त्या ? ।
व्यसने समुपस्थितेऽपि भर्तुर्यदशङ्कः कुरुषेऽधिकारमेवम् ॥ ७४

अयि ! वेत्ति भवानपीदृशं यत्, पितृभुक्तिर्मम **पत्तनं** यदेतत् ।
स्वधनग्रहणार्थमागतोऽहं, समयज्ञोऽसि तदर्प्यतामिदं मे ॥ ७५

---

**१ पुनश्च°** मु० ॥ **२ महीभृतां** मु० ॥ **३ °यच्छिन्न°** वा० ॥ **४ तेष्वऽप°** वा० ॥ **५ °रेऽपि भ°** वा० मु० ॥ **६ °पि वक्तः** वा० । **°पि वक्तुः** मु० ॥ **७ सिंहने°** वा० ॥ **८ °तिष्ठाः** वा० ॥ **९ स सत्य°** मु० ॥ **१० °ङ्कः पुरुषाधिकारमेकः** मु० ॥ **११ अपि** मु० ॥

यदि सम्प्रतिपत्तिरस्ति चित्ते, नगरस्यास्य नियोगवासना च ।
प्रणम द्रुतमेत्य तत् प्रसन्ने, मयि दूरे न तवाधिकारमुद्रा ॥ ७६

अपरोऽपि विधास्यतेऽधिकारी, नगरे कश्चन पैतृके मयाऽस्मिन् ।
भजसे यदि मां ततः स्थिरैव, त्वयि मुद्राऽस्तु गुणाः प्रिया प्रभूणाम् ॥ ७७

अथ चेतसि किञ्चिदन्यथा ते, स्थितमास्ते तदपि प्रियङ्करं नः ।
यदसाध्यविरोधिसाधनाय, प्रतिभूरेष ममास्ति खड्गदण्डः ॥ ७८

अवलेपमलीकमाश्रितो यः, प्रभुमल्पार्थिनमन्यथा करोति ।
कुपितेन स तेन दण्ड्यमानः, सह जीवेन ददाति वित्तजातम् ॥ ७९

**सिन्धुराजदूतं प्रति वस्तुपालस्य प्रतिवचः**

अथ स व्यथितोऽपि तद्वचोभिर्न विकारं प्रकटीचकार मन्त्री ।
मलिनत्वमुपैति वातनुन्नैर्न रजोभिः सुरवाहिनीप्रवाहः ॥ ८०

जगदे जगदेकबन्धुनैवं, सचिवेनाऽपसरद्वचाः स चारः ।
भवताऽभिहितं यदात्मभर्तुश्चरितं तन्न चमत्करोति कस्य ? ॥ ८१

तरणेरिव **सिन्धुराजसूनोर्**महसा दुष्प्रसहेन शुष्कदेहम् ।
दहति स्म सुखेन **लक्ष्मदेव**द्रुमसुच्चैरपि **यादवेन्द्र**दावः ॥ ८२

समरैकरतेरमुष्य सत्त्वस्तुतिकोलाहलकाहलानिनादैः ।
श्रुतिमार्गमुपैति मर्त्यलोके, सुभटानामभिधाऽपि नापरेषाम् ॥ ८३

विपरीतमतित्वमस्य मन्ये, यदसावर्थयते पुरं तदेतत् ।
हयसैन्यसहायतोऽपि **सिंहान्**नृपसिंहेन विगृह्य यद् गृहीतम् ॥ ८४

बहुभिः सह योद्धुमक्षमं मे, मनुते स्वामिनमेष तन्मृषैव ।
ननु निश्चलनिश्चयस्य पुंसस्त्रिदशा यान्ति सहायतां क्रियासु ॥ ८५

**वक्रपाटक**चेष्टितं न दृष्टं, न च **सिद्धेश्वर**सन्निधानयुद्धम् ।
किमनेन मनस्विनो यदस्य, क्षितिमाकाङ्क्षति लीलयैव लब्धुम् ? ॥ ८६

तनयः पितृवित्तमर्हतीति, व्यवहारः पुरुषान्तरेषु युक्तः ।
परसम्पदपेक्षिणां नृपाणां, स कृपाणे न कृतः पुनः प्रमाणम् ॥ ८७

तदुपेहि पतिं स्वमेवमस्मद्वचसा ब्रूहि च देव ! वेत्सि सर्वम् ।
अवले[11]पमिमं विमुञ्च नो चेदयमस्मि त्व[12]मितो विचार्य कुर्याः ॥ ८८

---

१ °रोधसा° वा० मु० ॥ २ °भूरस्ति ममैष स्व° मु० ॥ ३ °मभ्यर्थि° मु० ॥ ४ °नापि सर° मु० ॥५ °देहः वा० ॥ ६ °धायिनां परे° मु० ॥ ७ यदैत° वा० ॥ ८ सिंहनादान्नृ° वा० ॥ ९ °नु निश्चयनिश्चलस्य वा० मु० ॥ १० °स्विना यदीशक्षिति° प्र० ॥ ११ °पममुं वि° मु० ॥ १२ त्वमितो मु० ॥

श्रुत्वा वचः सचिवचक्रशतक्रतोस्तद्, भूयोऽप्यभाषत रुषा परुषाक्षरं सः ।
आः ! किं ब्रवीषि मदमन्दमतिस्त्वमेवं ?, देवस्य तस्य नियतं नहि वेदिताऽसि ॥ ८९

कुर्वाणस्त्वयि शस्त्रधारणमसावस्मत्पतिर्लज्जते,
येनैकेन रणाङ्गणेऽवगणितः सेनाघनः सिङ्घनः ।
तत् ते चेतसि चेद् विचारकणिका काऽप्यस्ति तन्मुच्यतां,
मानोऽयं नयवेदिनाऽथ भवता वैर्मेदमामुच्यताम्[1] ॥ ९०

अथ सचिवमवश्यमाहवाय, प्रवणमतिं मतिमानयं विदित्वा ।
पवन इव वनोन्मुखं कृशानुं, विभुमभिषेणनवाञ्छमभ्यगच्छत् ॥ ९१

**॥ इति श्रीगूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदी-नाम्नि महाकाव्ये दूतसमागमनो नाम चतुर्थः सर्गः ॥ ४ ॥**



१ वर्मेदमा° वा० मु० ॥

## पञ्चमः सर्गः ।

### सिन्धुराजेन साकं गूर्जरेश्वरस्य संग्रामः

कथितारिविचारेण, चारेण प्रेरितस्ततः । **सिन्धुराजात्मजः** सिन्धुर्वायुनेवोदजृम्भत ॥ १

कुपितः करवालेन, **सिन्धुराजाङ्गभूर्**बभौ । कल्पान्तविप्लुतः शम्भुः, कृतान्तेनेव सङ्गतः ॥ २

भृकुटीघटना भाले, तस्य भाति स्म भीषणा । त्र्यक्षचक्षुर्यया जिग्ये, युगान्तोद्वान्तपावकम् ॥ ३

रुषा स्मितमुखः **शङ्खः**, शङ्खपाणिसमच्छविः । नाभवद् भीतये कस्य सितविद्युदिवाम्बुदः ? ॥ ४

स प्रतस्थे हयोदस्तैः परागपटलैर्घनैः । प्रावृषं राजहंसानामकाले कल्पयन्निव ॥ ५

केकिपत्रमयच्छत्रच्छन्ना तस्य पताकिनी । जङ्गमोद्यानलेखेव, दोःस्थिताया जयश्रियः ॥ ६

झटित्यागत्य साटोपो, **वटकूप**सरस्तटे । व्याचष्ट पटहोद्घोषैर्द्विषामेष स्वमागतम् ॥ ७

निस्वाननिस्वनानस्य, स्वकर्णाभ्यर्णमागतान् । [१]उदस्तभृकुटीभङ्ग्या, मन्त्री प्रत्युदगादिव ॥ ८

मन्त्री यद्यपि गाम्भीर्याद्, भावं नाऽऽविश्चकार तम् । तथाप्येष कृतोत्थानैर्व्यक्तीभूतः शिरोरुहैः ॥ ९

सन्नद्धसैनिकः **शङ्खो**, भिन्नशङ्ख इव द्विपः । सङ्गरावेशदुर्वारः, सञ्चचार शनैः शनैः ॥ १०

[ [३]आविष्ट इव राधेयवधोग्रेण किरीटिना । स तदा सचिवश्चापमाममर्श मुहुर्मुहुः ॥ ]

स **चौलुक्यनृपा**मात्यः, सञ्चरत्यरिसञ्चये । सैन्यमारचयामास, त्रासमुक्तेन चेतसा ॥ ११

चन्दना-ऽगुरु-कर्पूर-कस्तूरीकुसुमस्रजः । स्वःस्त्रीसम्भोगमिच्छद्भिरिव धीरैर्विदध्रिरे ॥ १२

सन्नाहः सङ्गरारम्भसम्भवत्सत्त्वसम्पदः । उच्छ्वसत्[४]यामात्यस्य, न मात्यस्य तनौ तदा ॥ १३

दक्षिणेनांह्रिणा क्षोणि[५]क्षोदनाज्जयशंसिनम् । आरुरोह जवादश्वम**श्वराजाङ्गसम्भवः** ॥ १४

श्री**वीरनृप**मुद्रां यः, सदा धारयते करे । वीरशूद्रकमुद्राऽपि, धृता तेन तदा हृदि ॥ १५

भटा **भुवनपाला**द्या, यद्यप्यग्रे तदाऽभवन् । तथापि स पुरस्तेषां पौरैः शूरतया मतः ॥ १६

अग्रे शङ्खचमूचक्रं, मध्ये प्रहरणाङ्गणम् । पारेरत्नाकरं वीरशिरोरत्नमसौ स्थितः ॥ १७

समासन्नेऽपि सङ्ग्रामे, शौर्योद्भेदं न भाषितैः । स चक्रे सचिवोत्तंसः, क्रियासाराहि तादृशाः ॥ १८

स्थितं सङ्ख्यमुखे **शङ्ख**स्तं वीक्ष्य विकसन्मुखम् । पाणौ रणरसोत्तालः, करवालमलालयत् ॥ १९

स्थितेऽत्र सम्मुखे **शङ्खः**, प्रवेष्टुं नाशकत् पुरीम् । रोहिणीं रोषरौद्रोऽपि[६], यथा दशरथे शनिः ॥ २०

चलन्मन्त्रिबलोत्क्षिप्तः, [७]क्षोणिरेणुगणोऽनणुः । उदेष्यतः प्रतापाग्नेर्धूमराशिरिवोत्थितः ॥ २१

धूलिध्वान्तोदये तस्मिन्, मुखोद्द्योतेन मन्त्रिणः । प्रतापः प्रकटीचक्रे, श्री**वीरधवल**प्रभोः ॥ २२

प्रभूतमपि तत् सैन्यं, क्षोभायाभून्न मन्त्रिणः । तेऽल्पेऽपि बहवो येषां, रणारम्भे स्थितं मनः ॥ २३

स्थितेन तेन धीरेण, कर्तुमद्वैतमात्मनः । गोष्ठीसमः समि[८]त्यां स, स्याद्वादी सचिवो यदि ॥ २४

---

१ **केतुप**° मु० ॥ २ **उदस्तभ्रू**° मु० ॥ ३ पद्यमिदमधिकं वर्त्तते **प्र०** आदर्शे ॥ ४ °**त्या अमा**° मु० ॥ ५ **क्षोणीक्षो**° प्र० ॥ ६ °**पि, व्यथादशरथो** मु० ॥ ७ **क्षोणीरेणुगणो ननु** मु० ॥ ८ °**त्यां यः, स्या**° मु० ॥

वाहिन्योस्तत्र सम्भेदे, स कोऽपि तुमुलोऽभवत् । यस्याग्रे मन्द्रतामेति, सामुद्रोऽपि महाध्वनिः ॥ २५

अवाञ्चितानि चापानि, भ्रुवोर्युग्ममुदञ्चितम् । सुभटैः कोपसाटोपैः, सेनयोरुभयोरपि ॥ २६

काण्डानां सह कोदण्डगुणैः सन्धिरजायत । तेषां वीरप्रकाण्डानां, विग्रहस्तु परस्परम् ॥ २७

कर्णे लगद्भिरन्येषामन्येषां जीवितव्ययम् । कुर्वाणैर्विदधे बाणैः, स्पष्टं दुर्जनचेष्टितम् ॥ २८

तत्राऽऽहवमहातीर्थे, विशिखैर्गुणनिर्गतैः । भित्त्वा विकर्तनं चक्रे, परस्मिन् पुरुषे लयः ॥ २९

विहाय शरधिं वेगाच्चापमापुः शिलीमुखाः । चिह्नमेतत् सपक्षाणां, विधुरे यत् पुरः स्थितिः ॥ ३०

वक्षो विक्षिप्य वैपक्षं, पत्रिणः परतो गताः । न चिरं निर्गुणैर्लभ्या, धीराणां हृ[२]यवस्थितिः ॥ ३१

खड्गिनः खड्गिभिः कुन्तपाणयः कुन्तपाणिभिः । योधा योधैर्हयारूढा, हयारूढैश्च सङ्गताः ॥ ३२

मन्त्रीशकरसंसर्गादिव दानार्थमुद्यतः । असिरुत्सृष्टवान् कोशं, बद्धमुष्टिरपि क्षणात् ॥ ३३

वीराणां पाणि-पादाब्जैः, पूजितेवाऽऽहवक्षितिः । दत्तार्थेव च दूर्वाभकेशमिश्रैः शिरःफलैः ॥ ३४

अहिंसाव्रतभङ्गेन, का स्यात् तस्यात्र वाच्यता ? । पुरुषव्रतनिर्वाहो, येन तादृक् कृतस्तदा ॥ ३५

अहिंसाभङ्गसम्भूतां, मन्त्री मार्ष्टुं मनःखिदम् । चक्रे दिव्यमिव स्नानं, स शूरः शरवृष्टिभिः ॥ ३६

प्रभुप्रोत्साहनं पृष्ठे, मागधोत्तेजनं पुरः । विक्रान्तानां विशेषेण, जातं विक्रमवृद्धये ॥ ३७

उद्दिश्यापि द्विषा मुक्तैर्न मन्त्री बिभिदे शरैः । अदृष्टः कोऽपि शिष्टानां, बद्धकक्षो हि रक्षणे ॥ ३८

सुभटासृक्सरित्पूरः पुरस्ताद् दुस्तरो यदि । तथापि न विशश्राम, मन्त्री शत्रूनभि व्रजन् ॥ ३९

विभाव्य तमसम्भाव्यमवष्टम्भं रणे रिपोः । स्वचमूच[३]संहारमारब्धं च परैः पुरः ॥ ४०

वीरः **सङ्ग्रामसिंहो**ऽथ, सङ्ख्ये शङ्खापराह्वयः । आविर्भावितवानुच्चैर्निजसंरम्भसौरभम् ॥ ४१

युग्मम् ॥

अपि भ्रूपल्लवोल्लासः, परैर्यस्य सुदुःसहः । तस्य **सङ्ग्रामसिंह**स्य, खड्गोल्लासं सहेत कः ? ॥ ४२

त[४]न्तकमिवाऽऽयान्तमनपेक्षितजीवितः । भटो **भुवनपाला**ख्यः, शङ्खे प्रत्यभिजग्मिवान् ॥ ४३

सखा शङ्खस्य **सामन्तः**, सेनां सीमन्तयन्नरैः । बलाद् **गुलकुलो**त्तंसमभ्ययुङ्क्त तमन्तरा ॥ ४४

शास्त्रैः शस्त्रेषु भग्नेषु, तयोरप्रतिमल्लयोः । मल्लयोरिव सञ्जज्ञे, केशाकेशि भुजाभुजि ॥ ४५

वियति प्रेक्षमाणाभिरप्सरोभिर्मृधं तयोः । बहु मेने स्वकीयानां, चक्षुषामनिमेषता ॥ ४६

**सामन्त**मन्तकस्यान्तं, स नीत्वा सत्वरं पुनः । समं **सङ्ग्रामसिंहे**न, सङ्ग्रामं कर्तुमभ्यगात् ॥ ४७

**शङ्खे**न ख[५]घातैस्तैः, खण्डं खण्डं कृतं वपुः । सङ्ख्ये **भुवनपाल**स्य, पौरुषं न तु खण्डितम् ॥ ४८

स वीरो मन्त्रिवीरस्य, **शङ्खा**सिच्छिन्नमस्तकः । तस्य प्रभुप्रसादस्य, प्राणै[६]च्छ्रवणोऽभवत् ॥ ४९

श्रुत्वा **भुवनपाल**स्य, निधनं मृधमूर्धनि । मन्त्री तेनैव वैरेण, रणाय प्रवणोऽधिकम् ॥ ५०

प्रियं विक्रामतां क्रेतुमसुभिः सुलभं यशः । धृतासिः प्राविशद् वीरो **वीरमः** समरापणम् ॥ ५१

**शङ्खपत्तिर्जयन्तश्च,** मन्त्रिपत्तिश्च **वीरमः** । उभौ [७]म्भुसभां यातौ, सविवादौ जयश्रिये ॥ ५२

वैरिणामपि वीरेण, रणान्तर्व्ययितात्मना । वाचि **चाचिगदेवे**न, स्वबाहुस्तुतिराहिता ॥ ५३

---

१ **तुमलो** प्र० वा० ॥ २ **हृदयस्थितिः** प्र० ॥ ३ °**रसङ्गार**° वा० ॥ ४ **मङ्क्षमिवमाया**° मु० ॥ ५ °**ङ्गपातै**° मु० ॥ ६ **रुच्छ्वाव**° प्र० वा० ॥ ७ **शम्भू समां या**° मु० ॥

स्थित्वा विपद्यमानेन, भग्नेऽपि स्वचमूजने । पदे पदे कृतः स्तोमः, **सोमसिंहेन** सङ्गरे ॥ ५४

स्वामिशत्रुमहत्वाऽपि, मृतोऽस्मीति ह्रिया किल । **विजयेन** तथा यातं, नेहाऽऽयातं यथा पुनः ॥ ५५

क्ष्मातलक्षेपबुद्ध्येव, शङ्खेन दृढमाहतः । भटो **भुवनसिंहस्तु**, सपदि त्रिदिवं गतः ॥ ५६

प्राणेभ्योऽपि प्रियं शस्त्रं, क्षत्राणामिति निश्चयः । तथाऽ**भ्युदयसिंहेन**, त्यक्तास्ते नोज्झितं तु तत् ॥ ५७

स्वखड्गखण्डितैर्वीरशिरोभिर्विषमीकृते । पेते **विक्रमसिंहेन**, क्रोधान्धेन मृधाध्वनि ॥ ५८

वि[1]भ्येमुः **कुलसिंहेन**..........दर्शनात् । वक्रा च विस्फुरत्कुन्ते, युद्धे वै कुण्ठवुद्धिना ॥ [2]५९

भित्त्वा भल्लीभिरं[3]ङ्गेभ्यो, निर्गताननपङ्क्तिभिः । उद्द[4]लॅन् शुशुभे त[5]त्र, सोऽयं द्रुम इवोद्दलः ॥ ६०

पश्यतः स[6]चिवं धीरं, तथैव स्थितमग्रतः । शङ्खस्यापि चमत्कारः, प्रससार तदा हृदि ॥ ६१

विकारवर्जितं वीक्ष्य, साक्षात् तं पुरुषं परम् । प्रवुद्धमिव शङ्खेन, विरमत्कोपसम्पदा ॥ ६२

**चौलुक्यचन्द्र**सचिवेन्द्रमवार्यशक्तिं, मत्वा स्थितं स्थगयताऽथ रजोभिराशाः ।
आकम्पितप्रचुरपत्रनृपांह्रिपेण, शङ्खेन या[7]तमपसृत्य महाबलेन ॥ ६३

मन्त्रीश्वरोऽयमनुभूतभटोपमर्दः, सौवर्णपिण्ड इव सोढहुताशतापः ।
आनन्दकन्दलितबाष्पविलोचनेन, लोकेन पूजितमतीव बभाज तेजः ॥ ६४

**सङ्ग्रामसिंहं** स महानियोगी, योगी यथा योगबलेन कालम् ।
संहर्तुमायान्तमतीत्य चक्रे, कुशाग्रबुद्धिः कुशलं पुरस्य ॥ ६५

संवीक्ष्य वीररसरोपितरोमराजिराजिक्षितिं क्षतभटामि[8]र्षगर्द्धिगृद्ध्राम् ।
मन्त्री न्यवर्तत ततः प्र[9]मदाश्रुपूतैः, सूतैः पुरः प्रतिपदोदितदोर्विभूतिः ॥ ६६

सन्धाय वन्धुनताजनितोपगेधा[10]द्, दूरे विरुद्धहृदयोऽपि समं नृपस्तैः ।
पुत्रेण तेन सह दुःसहपौरुषे[11]णे, सोऽथाऽऽससाद नगरीं **लवणप्रसादः** ॥ ६७

प्रतिनृपतिभिर्भग्नोत्साहैर्निमग्नमिव क्वचित्,
स च नरपतिर्वीरस्तीरं जगाम मृधाम्बुधेः ।
दिशि दिशि यशःस्तोमान् **सोमान्वयी** समचारय–
[12]चतुरकुरलीचाणै[13]क्योऽयं प्रियङ्करणैर्गुणैः ॥ ६८

**॥ इति गूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये युद्धवर्णनो नाम पञ्चमः सर्गः ॥ ५ ॥**



---

१ **विमभ्यः** मु० ॥ २ प्र० आदर्शे पद्यस्यास्य स्थानं रिक्तं वर्तते ॥ ३ °**रङ्गिभ्यो** वा० मु० ॥ ४ °**न् सो शुभे** वा० ॥ ५ **तत्रेशोऽयं** वा० मु० ॥ ६ °**वं हीरं** वा० मु० ॥ ७ **यानम**° वा० मु० ॥ ८ °**षमर्द्धिग्रध्रा** वा० । °**षमार्धगृध्नाम्** मु० ॥ ९ **प्रमदोपपूतैः** वा० । **प्रमदोपहूतैः** मु० ॥ १० °**धाद्, वीरैर्विरु**° मु० ॥ ११ °**ण स्वार्थो स**° वा० मु० ॥ १२ **चतुरतुरली**° मु० ॥ १३ °**क्योऽसौ प्रि**° प्र० ॥

## षष्ठः सर्गः ।

श्री**वस्तुपालेन** बलान्निरस्तां, तां दुस्तरामापदमाकलय्य ।
महोत्सवानामकृत प्रवृत्तिं, वीतोपसर्गः पुरवासिवर्गः ॥ १

गृहे गृहे धातुरसानुलेपाः, समन्ततः स्वस्तिकपङ्क्तिमन्तः ।
विरेजिरे तूर्यरवानुकूलाः, कुलाङ्गनामङ्गलगीतयश्च ॥ २

बभूव देवेषु विशेषपूजा, राजन्यमार्गेषु विशेषशोभा ।
विशेषहर्षः पुरपूरुषेषु, विशेषवेषश्च वधूजनेषु ॥ ३

येषां निमेषार्द्धमपि क्षपायामायान्न निद्रा रिपुविद्रवेण ।
सुस्थीकृतानां[1] सचिवोत्तमेन, तेषां च हर्षान्तरितेयमासीत् ॥ ४

पुरंप्रजानां प्रमदामृतेन, तेनातिमात्रं शिशिरीकृतानाम् ।
निःशेषिताशेषसरःसमृद्धिर्ग्रीष्मो न भीष्मोऽप्यभवद् भयाय ॥ ५

शिरीषपुष्पप्रचयच्छलेन, शुचिर्दधानो हृदयं प्रदीयः[2] ।
आषाढवान् बाढमपास्तकामः, कर्मन्दिकल्पस्तमुपाजगाम ॥ ६

आमात्यमालोक्य **चुलुक्यभर्तुः**, कर्तुं स्थितं शस्त्रभृतो निरस्त्रान् ।
मन्ये मनोभूरपि मन्दमन्दं, चापक्रियाचापलमाचचार ॥ ७

दिङ्मण्डली पाटलिपुष्पगन्धसम्बन्धसोन्मेषमरुन्मिषेण ।
शान्तोपतापा सचिवेन तेन, सन्तोषतः श्वासमिव व्यमुञ्चत् ॥ ८

अस्मान् सुखेनोत्तरतु भ्रमन्ती, कीर्तिस्तदीयेति कृशास्तटिन्यः ।
बभूवुरासामसदेतदन्तः, सा हि क्षमा सागरलङ्घनेऽपि ॥ ९

प्रतापिनः पल्लवितप्रतापः, शुचिः शुचित्वाधिगतप्रसिद्धेः ।
कविप्रियोऽसौ प्रथयाञ्चकार, निन्दां निदाघस्य जडप्रियस्य[3] ॥ १०

पीयूषबिन्दुप्रसवं स्रवन्ती, गुणावलिर्यस्य गलन्तिकेव ।
स्थितोपरिष्टादपि विष्टपस्य, प्रीतिं प्रतप्तस्य तदा ददाति ॥ ११

ऋतुर्दिगन्ताक्रमणोद्यतस्य नयत्रयं बुद्धिमिनस्य तेजः ।
तेनाभविष्यत् सचिवेन तुल्यः, प्रजोपतापं यदि नाकरिष्यत् ॥ १२

संशोषिताशेषनदे निदाघे, मन्त्रीशदृष्टिः कमलाभिरामा ।
तृष्णापहारं न चकार कस्य, प्रपेव सन्मार्गमुपागतस्य ? ॥ १३

पुण्ड्रेक्षवः क्षीणरसाः सरस्यः, शुष्का विशुष्काश्च गवां समूहाः ।
चूतद्रुमो वा सचिवोत्तमो वा, तदाऽर्थिसार्थं सफलीचकार ॥ १४

---

**१ स्वस्थी** प्र० ॥ **२ प्रदीपः** मु० ॥ **३ जलप्रि॰** वा० ॥ **४ चतु॰** मु० ॥

स्वरक्षितस्याथ पुरस्य तस्य, वैशेषिकीं वीक्षितुमेष शोभाम् ।
इष्टां नमस्कर्तुमनाश्च देवीं, श्रीवस्तुपालः सचिवश्चचाल ॥ १५

प्रसर्पतः प्रोषितगर्वभावात्, परिच्छदो यद्यपि तस्य तुच्छः ।
स्त्रीभिः कृताः प्रेक्षणकाङ्क्षिणीभिस्ते सङ्कटा राजपथास्तथापि ॥ १६

तं राजवीथ्यामथ सञ्चरन्तमालोकयन्त्यः पुरलोककान्ताः ।
दातेति पातेति जयीत्ययीति, क्षमीति वाग्मीति भृशं शशंसुः ॥ १७

मनोरमाकारममात्यमेतमिवोपगन्तुं हृदयानि तासाम् ।
चक्रुः पुरस्तादुपढौकनाय, फलद्वयं चारुकुचद्वयेन ॥ १८

तमन्तिके यान्तमवेत्य बन्दिशब्दैरथ द्रष्टुमगारगर्भात् ।
द्रुतं प्रयान्ती रसनानिनादैराकारयत् काऽपि सखीरिवान्याः ॥ १९

जवेन यान्त्यास्तदवेक्षणाय, कस्याश्चिदम्भोजनिभेक्षणायाः ।
काञ्ची सखीभिर्विधृता गलन्ती, नितम्बतो न स्थिरता तु चित्तात् ॥ २०

तदा तदालोकनलोलदृष्टिः, संवृण्वती स्वाङ्गकमंशुकेन ।
हृत्कोटरान्तर्निहितस्फुलिङ्गमनङ्गमन्या प्रकटीचकार ॥ २१

तेनाङ्गना प्रत्यवलोकिताऽन्या, त्रपातिभारेण भृशं नमन्ती ।
रराज कन्दर्पकिरातमुक्तसमापतन्मार्गणवञ्चिनीव ॥ २२

परा स्मरावेशनिवेशिताश्रुः, प्रयुक्तनेत्रद्वितयाञ्जनाऽपि ।
सुधानिधानं सचिवप्रधानं, नालोकितुं सम्यगलम्बभूव ॥ २३

न पुष्पचापादपरोऽस्ति चापी, यस्मादमात्यप्रणयोन्मुखीनाम् ।
न कञ्चुके किञ्चन वेधचिह्नं, भिन्नं मनस्तेन घनस्तनीनाम् ॥ २४

लज्जावती तं प्रति काऽपि बाला, जालान्तरालेन दृशं मुमोच ।
इषुर्ययाऽजीयत वप्रमारमार्गार्गतः कामचमूचरस्य ॥ २५

तद्दर्शिनीनां हृदि सुन्दरीणां, मनोभवक्ष्माधवकेलिसौधे ।
प्रभूतदुर्वारपरिच्छदोऽपि, लेभे प्रवेशं सचिवेन्दुरेकः ॥ २६

मन्त्रीशमालोक्य सुलोचनानां, स्वभावलोलान्यपि लोचनानि ।
नान्यत्र कुत्रापि गतिं वितेनुर्गुणैस्तदीयैरिव सन्दितानि ॥ २७

श्रीखण्डमत्युत्सुकया कयाचिद्, देहैकदेशे निहितं ततोऽपि ।
घर्माम्भसा मृष्टममात्यदृष्टाविष्टाप्तिरल्पाऽपि जडादपैति ॥ २८

समीपमाजग्मुषि तत्र मन्त्रिमधौ दधाने सुमनःसमृद्धिम् ।
रोमोद्गमोद्यन्नवमञ्जरिश्रीर्माकन्दमालेव परा व्यराजत् ॥ २९

१ °यी नयी° मु० ॥ २ °याती वा० ॥ ३ °णबन्दिनी° वा० ॥ ४ °न्तरेण[स्व]हृ° वा० ॥
५ °गाङ्गतः वा० ॥ ६ °व बन्दि° मु० ॥ ७ °मोद्यमो° वा० मु० ॥

उद्दामकामक्षितिपाज्ञयेव, क्रियान्तराण्यर्द्धकृतानि मुक्त्वा ।
स्त्रीणां गणः श्रीकरणप्रधानममुं समालोकत सावधानः ॥ ३०

खिन्नाऽध्वनि श्रोणिभरेण तावदेथ व्रजन्तं सचिवं विलोक्य ।
काऽपि प्रयातुं पदमप्यशक्ता, सहामुना स्वं प्रजिघाय चेतः ॥ ३१

ग्रहैः शुभैः सत्यममात्यशम्भुर्दृष्टः स दृष्ट्या परिपूर्णयैव ।
पुराङ्गनानामनुरागिणीनां नेत्रत्रिभागैर्न निभालितो यत् ॥ ३२

तत्कालमुन्मीलितमीनकेतुज्वरातुराणां पुरसुन्दरीणाम् ॥
अदत्त चित्तं न स दान्तचित्तस्तद्धर्मपत्न्याः प्रथमं हि दत्तम् ॥ ३३

रेमे न रम्येऽपि वधूजनेऽत्र नेत्रद्वयं मन्त्रिमतल्लिकायाः ।
न तादृशास्तादृशसंयमेषु, प्रलोभनाय प्रभवन्ति भावाः ॥ ३४

अथाऽऽशिषः सैष नतेन मूर्ध्ना गृह्णन् वितीर्णाः कुलबालिकाभिः ।
विभूषितस्तम्भपुरोपशल्यामेकल्लवीरां प्रददर्श देवीम् ॥ ३५

तां सप्तलोकप्रणतां प्रणन्तुं, जगाम दूरे स दुरापकीर्तिः ।
न वेत्ति विद्वानपि संवसन्तीं, वाणीस्वरूपेण निजे मुखाब्जे ॥ ३६

दुग्धेन दध्ना मधुना घृतेन, खण्डेन तोयेन च शुद्धमूर्तिम् ॥
आनर्च देवीं सचिवः प्रसून-कर्पूर-कृष्णागुरु-चन्दनाद्यैः ॥ ३७

चकार देवीवदनारविन्दे, स दन्तपङ्क्तिं घनसारखण्डैः ।
हर्षं वहन्ती हृदि सप्रकर्षं, साक्षात् सहासेव बभौ यया सा ॥ ३८

नैवेद्यवृन्दैरनवद्यवृत्तैः, शिष्टानुकूलश्च दुकूलकूटैः ।
धूपैरयं भूपसभानुरूपः, प्रसादयामास दयाश्रयस्ताम् ॥ ३९

नुत्या च नत्या च विशेषवत्या, देवीं समानीय मुदं स मानी ।
श्रीवीरभूपालकृपाणदण्डे, स्थितिं ययाचे हृदि च स्वकीये ॥ ४०

अथोष्मणि ग्रीष्मसमुत्थितेऽन्तर्देहं स्मास्कन्दति देहभाजाम् ।
शङ्के समग्रोऽपि रसः सशङ्कः, स्वेदाम्बुदम्भेन बहिर्बभूव ॥ ४१

चण्डद्युतौ मण्डयति द्युमध्यं, मध्यन्दिनोद्दीपितदीप्तिदृप्ते ।
समं स मन्त्री गुणिनां गणेन, क्रीडावनं प्राप सनीडवर्ति ॥ ४२

मन्त्री तदासाद्य वनं ननन्द, ग्रीष्मे महीं शोषयितुं स्थिते यत् ।
भ्रमद्घटीसङ्घटितारघट्टखाट्कारशब्दैः प्रतिगर्जतीव ॥ ४३

दीर्घैर्निदाघस्य दिनैर्मनोभूरलब्धसिद्धिर्भजति स्म सम्यक् ।
वनस्य तस्यातिघनद्रुमस्य, च्छायातमीं तारकितां प्रसूनैः ॥ ४४

---

१ °दद्य व्र° मु० ॥ २ °र्णयेव मु० ॥ ३ °न विलोकितो वा० मु० ॥ ४ °पत्न्या प्र° वा० ॥ ५ °लकामिनीभिः प्र० ॥ ६ हास्येव वा० मु० ॥ ७ °डकीर्त्ति वा० ॥

अमात्यमत्यर्थमपास्तदौस्थ्यं, पिकाङ्गनाकूजितकैतवेन ।
उल्लासिमल्लीमुकुलाग्रदेत्यः, सत्यं स्तुवन्ति स्म वनाधिदेव्यः ॥ ४५

हिमासहोऽयं समयस्तमिस्रहिंस्रः सहस्रांशुरिमौ समेतौ ।
मत्वेव ते भीति-रती प्रविष्टे, छायाविशिष्टं वनदुर्गमेतत् ॥ ४६

लीलावनेऽस्मिन् नवमेघलीलामरन्दबिन्दुप्रकरं किरन्तः ।
विनाऽपि वर्षासमयेन हर्षं, शिखण्डिनां ताण्डवयन्ति वृक्षाः ॥ ४७

स एव घर्मांशुकरानुषङ्गादङ्गानि पुंसां पवनो दुनोति ।
धिनोति सद्वृक्षवनोपसेवी, सङ्गः कुलीनैरत एव युक्तः ॥ ४८

प्रकल्पितायां क्षितिकल्पवृक्षो, द्राक्षालतामण्डपवेदिकायाम् ।
कृतोपवेशः स चकार गोष्ठीमनिष्ठुरोक्तिप्रसरैः कवीन्द्रैः ॥ ४९

केचित् कुलं भीतिनिराकुलस्य, कृतावदानस्य परे च दानम् ।
मान्यत्वमन्ये विनिवृत्तमन्योर्व्याचख्युराख्येयगुणस्य तस्य ॥ ५०

कवीन्द्रशैलेन्द्रविनिर्गतानां, सरस्वतीनां प्रसृतान् प्रवाहान् ।
आरुह्य भूमण्डलमासमुद्रमियर्ति मन्त्रीश्वरकीर्तिहंसी ॥ ५१

कवीश्वराणां पृणति स्म वाणी, कर्णद्वयं कर्णसमस्य तस्य ।
सोऽपि प्रमोदं हृदयेषु तेषामुदारपाणी रचयाञ्चकार ॥ ५२

दत्ते स्म तेभ्यः सचिवः कविभ्यः, प्रभूतमत्यद्भुतकीर्तिरर्थम् ।
आदत्त चिद्रूपतया निगूढमप्यर्थलेशं तु तदुक्तसूक्तात् ॥ ५३

मनीषिणां मानसमन्दिरेषु, श्रीमानमात्यो निवसन्नजस्रम् ।
तेभ्यः स क्लृप्तं वितरत्यगण्यहिरण्यविश्राणनकैतवेन ॥ ५४

तस्मिन् वने सत्कविवक्त्रयन्त्रविनिर्गतेन श्रवणामृतेन ।
संसिच्यमानः सचिवः प्रधानमह्नाय मध्याह्नमयं निनाय ॥ ५५

आशायामशिशिरधाम्नि पश्चिमायामायाते सुकृतवतामपश्चिमोऽसौ ।
तान् कृत्वा घनकनकैः कवीन् कृतार्थानावासं स्वमभि चचाल **वस्तुपालः** ॥ ५६

**॥ इति श्रीगूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये पुरप्रमोदवर्णनो नाम षष्ठः सर्गः ॥ ६ ॥**



---

१ °दन्त्यः वा० मु० ॥ २ तदीयस° मु० ॥ ३ °मोदो नाम प्र० ॥

## सप्तमः सर्गः ।

अथोदयति निर्दोषे, सचिवेन्दौ नवे रवौ । कोक-कोकनदानन्दि, मन्दिमानमगान्महः ॥ १
गम्यः सोऽपि जगच्चक्षुश्चक्षुषां समपद्यत । कः कालवलनेनात्र, निस्तेजा नहि जायते ? ॥ २
लौहित्यं विद्रुमालीषु, द्रुमालीपल्लवेषु च । अधिकं निदधे व्रध्नः, किरणैः कुङ्कुमारुणैः ॥ ३
शुशुभे दिक्षु सर्वासु, प्रज्वलत्तपनोपलः । शिरस्थरविरस्ताद्रिः, पञ्चाग्निव्रतवानिव ॥ ४
वियोगव्यथया वीक्ष्य, साक्रन्दां चक्रकामिनीम् । प्रम्लाना सहसंवासस्नेहेनेव सरोजिनी ॥ ५
मित्रेऽस्तमागते दुःखादब्जैः प्रागान् जिहासुभिः । शालिग्रामशिलेवालिव्याजादारोपिता हृदि ॥ ६
न मित्रमन्तरेणाँपि, क्षणमभ्यासवासरः । भवत्यव्यभिचार्येव, सङ्गतं गतदोषयोः ॥ ७
प्रतापः प्राप मन्दत्वं, वारुणीसेवया रवेः । भवेत् प्रभावभङ्गाय, महतोऽपि हि दुष्कृतम् ॥ ८
निश्चला कस्य वाऽन्यस्य, भुवने श्रीर्भविष्यति ? । आसीद् वसुविहीनोऽसौ, यदह्नामपि नायकः ॥ ९
अपि तादृशमस्ताद्रिर्दिनेशं निरकाशयत् । चिरं न ह्याश्रयः क्वापि, प्राप्यते दिवसात्यये ॥ १०
कुलायमाकुलाः सर्वे, पक्षिगस्तत्क्षणादयुः । कस्त्यजत्यथवा पत्यं, सत्यां सवितुरापदि ? ॥ ११
वनान्ताद् वलमानेन, कुलेनोद्गमितैर्गवाम् । पांसुभिर्मांसलीभूतं, कुतोऽप्याविरभूत् तमः ॥ १२
समन्ततोऽपि काष्ठानां, प्लुष्टानां चित्रभानुना । धूमेनेव तमिस्रेण, प्रसस्रे गगनाङ्गणे ॥ १३
मुक्त्वा निःश्रीकमप्यब्जं मराली न गताऽन्यतः । भ्रमराली त्वगाद् वेगादिदं सदसदन्तरम् ॥ १४
त्रैलोक्यदीपके देवे, लोकान्तरमुपेयुषि । तमस्तान्तमभूद् विश्वं, कः सुखी महदापदि ? ॥ १५
गते भानौ स्थिते ध्वान्ते, पद्मिन्या साधु मीलितम् । दुरीक्षा महतामापदसतामुन्नतिश्च यत् ॥ १६
स्थित्वाऽथ प्रस्थिता सन्ध्या, व्रजद्वाजिव्रजाकुला । आक्रामतः परं लोकं, रवेः पश्चाच्चमूरिव ॥ १७
ससन्ध्या-वासरं सूर्यं, मत्वा देशान्तरं गतम् । जाया-ऽनुजान्वितं राममिव म्लानमभूज्जगत् ॥ १८
क्व गतः सविता ? ध्वान्तमेतदप्यागतं कुतः ? । एवं सविस्मयेव द्यौः, स्फारतारमवैक्षत ॥ १९
दीपकौ अपि दीप्यन्तां, स्फुरन्तु तिमिराण्यपि । तद् गतं हि सजातीय-विजातीयासहं महः ॥ २०
स्रष्टुः सृष्टिर्विचित्रेयं, यस्मात् सङ्केतवर्त्मना । पियानभिसरन्तीनां, प्रकाशकमभूत् तमः ॥ २१
प्रदोषानन्तरं चन्द्रोदयादर्वाग् मृगीदृशाम् । मुहूर्तमभिसाराय, मारमौहूर्तिकोऽब्रवीत् ॥ २२
सुरतव्रतचर्यायै, पर्यङ्कादपि सज्जितात् । पांशुलानामभूत् पांशुतल्पतीर्थं यैवाधिकम् ॥ २३
नीरन्ध्रेणान्धकारेण, रोदसी सम्पुटीकृते । अद्योद्घाटयितुं कोऽपि प्रवृत्त इव पूर्वतः ॥ २४
रचित्तोपक्रमे राज्ञि, चक्रमाक्रमितुं दिशाम् । प्रभादम्भेन नासीरमाविरासीत् पुरः स्फुरत् ॥ २५
रोहिणीरमणं वीक्ष्य, रागादागतमन्तिके । सस्मितेव तदुद्द्योतदम्भादभवदिन्द्रदिक् ॥ २६
अथोजगाम सामन्तः, कुसुमास्त्रमहीपतेः । शृङ्गाररस्य जयोद्गारबन्दी कुमुदबान्धवः ॥ २७

---

१ °णात्र, क्ष° प्र० ॥ २ °वा यस्य, स° वा० । °वा यत्रं, स° प्र० ॥ ३ °न्तरे ग° प्र० ॥
४ दीपिका मु० ॥ ५ यथाधि° प्र० ॥

आविर्बभूव पूर्वस्माद्द्रेश्चन्द्रः शनैः शनैः । तदीयैस्तटमाणिक्यकिरणौघैरिवारुणः ॥ २८
चकार तारिकारोचिरङ्कूरोत्करकैतवात् । करस्पर्शेन रागिण्याः, सोमो रोमोद्गमं दिवः ॥ २९
पुंश्चलीनां तपश्छिद्रं, समुद्रस्य महोत्सवः । रससिद्धिरनङ्गस्य, दिवमिन्दुरगादगात् ॥ ३०
मालिन्यं मार्जयामास, चन्द्रमास्तिमिरैः कृतम् । खलैर्दत्तं मृषादोषमिव सत्पुरुषः सताम् ॥ ३१
व्योमाङ्गणविकीर्णानि, तमांसि तुहिनद्युतिः । ममार्ज रुचिमार्जन्या, कुलटाकुलकण्टकः ॥ ३२
न मृगाङ्के कलङ्कोऽयं, कस्तूरीतिलकाकृतिः । निर्दग्धो नीलकण्ठेन, तिष्ठत्येष झषध्वजः ॥ ३३
दिवि स्वर्वाहिनी हंसैर्दिक्षु दन्तैश्च दन्तिनाम् । मेदुराऽजनि मेदिन्यां, कौमुदी कौमुदैर्वनैः ॥ ३४
कणेहत्य चकोरीणां गणः पीत्वा सुधासवम् । अजायत मदेनेव, गुञ्जापुञ्जारुणेक्षणः ॥ ३५
मरीचिनिचये चान्द्रे, सति सान्द्रे समन्ततः । घटितं विष्टपं दन्तसन्तत्या दन्तिनामिव ॥ ३६
शान्तध्वान्त-घनस्तोमे, कौमुदी-शरदागमे । हृदि श्यामोऽन्यतः श्वेतश्चकाशे चन्द्रखञ्जनः ॥ ३७
चन्दनैश्चर्चितेव द्यौर्दिशः काशैरिवं श्रिताः । क्षीरेण क्षालितेवोर्वी, शर्वरीशे विराजति ॥ ३८
पीयूषपायसैः प्रीतं, चकोरद्विजसञ्चयम् । श्रेयोऽर्थं मन्मथस्येव, चकार शिशिरद्युतिः ॥ ३९
सन्दोहैरिन्दुकान्तानां, तदा सम्भवदम्भसाम् । प्रीतये चैत्रमित्रस्य, चन्द्रश्चक्रे प्रपा इव ॥ ४०
तरुणे तारकाध्यक्षे, वृक्षच्छाया विरेजिरे । तमसः खण्ड्यमानस्य, प्रतीकाः पतिता इव ॥ ४१
रमयत्यखिलामुर्वीमचण्डद्युतिमण्डले । कन्दर्पनृपते राज्यमेकच्छत्रमिवाभवत् ॥ ४२
सान्द्रे चन्द्रातपे तत्र, स्फुरद्भिः कैरवाकरैः । क्षीरनीरधिडिण्डीरपिण्डानां पाण्डिमा जितः ॥ ४३
नीलाब्जमधुमत्तालिकुलकोलाहलैरिव । मानसे मदिराक्षीणां, प्रबुद्धः कुसुमायुधः ॥ ४४
अनल्पाक्षीभिराकल्पास्तेनिरे तदनन्तरम् । विजिगीषोरनङ्गस्य, संनाहाः सुभटैरिव ॥ ४५
ज्योत्स्नाजलनिमग्नायाः, कस्याश्चित् कुञ्चितभ्रुवः । शरीरे चन्दनं गौरे, सौरभ्यादन्वमीयत ॥ ४६
सर्वत्र व्यक्तशक्तीनां, तुषारद्युतिरोचिषाम् । जगाम वामनेत्राणां, केशपक्षो विपक्षताम् ॥ ४७
विधृता विश्ववन्द्येन, या शिवेनापि मूर्धनि । सा ज्योत्स्ना सुदृशां केशहस्तेन गलहस्तिता ॥ ४८
लग्नः पादेषु कान्तानां, नखान्तः प्रतिमामिषात् । याचितुं वक्त्रलावण्यकणिकामिव चन्द्रमाः ॥ ४९
कबरी कैरवाक्षीणां, कवरा केतकीदलैः । हसन्तीव व्यभादाभां, विलक्षामेणलक्ष्मणः ॥ ५०
यामिन्यामिन्दुशुक्लायां शुक्लवस्त्रावगुण्ठनाः । धम्मिल्लोद्भावितं विघ्नं, विजघ्नुरभिसारिकाः ॥ ५१
वधूनां वक्त्रमाविद्धं, रत्नकुण्डलकान्तिभिः । प्रियेषु सविलम्बेषु, रोषारुणमिव व्यभात् ॥ ५२
ताडपत्रश्रिया न्यस्तनीलाश्मगणवर्णया । पुस्तिकेव चकास्ति स्म, काचित् कामविपश्चितः ॥ ५३

कुचौ सुवृत्तौ धृतहारयष्टी, सकञ्चुकौ रेजतुरम्बुजाक्ष्याः ।
रतेः स्थिताया हृदि रक्षणाय, स्मरप्रयुक्ताविव सौविदल्लौ ॥ ५४

आकल्पिता शोभितकेलिशय्या, नियुद्धभूमीव वधूवरस्य ।
तत्रोपधानच्छलतो बभूव, निवेशवेदी स्मरपार्थिवस्य ॥ ५५

---

१ तदोयतट° वा० ॥ २ तारका प्र० ॥ ३ धारसम् मु० ॥ ४ °रिवाश्रि° वा० ॥ ५ इति वा० मु० ॥ ६ सुनाहाः वा० ॥ ७ °नं पौरैः, सौ° मु० ॥ ८ °न, श्रीदि° मु० ॥

एकावली वक्षसि विस्फुरन्ती, रराज राजीवविलोचनायाः ।
चेतःशरव्यावधिबोधहेतुर्लेखा खटिन्येव कृता स्मरेण ॥ ५६

दीपप्रभापिञ्जरितानि रेजुरल्पोदरीणां रतमन्दिराणि ।
आपूर्य चित्तान्यतिरिच्यमानैः, प्रियानुरागैरिव पूरितानि ॥ ५७

कुरङ्गनाभीकृतपत्रभङ्गी, कुचद्वयी चारुदृशश्चकाशे ।
सुप्तोत्थितस्य स्मरकुञ्जरस्य, मदाम्बुसिक्ता शयनस्थलीव ॥ ५८

माणिक्य-मुक्ताफल-काञ्चनानां, काचिन्मरीचिप्रचयार्चिताङ्गी ।
खरांशु-शीतांशु-हुताशनानां, महःसमूहैः पिहितेव रेजे ॥ ५९

ताम्बूल-वस्त्रा-ऽऽभरण-प्रसून-श्रीखण्डसंस्कारसमाकुलाभिः ।
सुलोचनानां परिचारिकाभिरसूच्यत श्रीतनयोत्सवश्रीः ॥ ६०

नवं वयश्चित्तमपेतचिन्तमिद्धः सुधांशुर्मधुरा परिस्रुत् ।
सख्योऽनुकूलाश्च विलासिनीनां खिदे तदा कान्तविलम्ब एव ॥ ६१

अनिच्छतीनां निजमानभङ्गं, सङ्गं प्रियैः सत्वरमिच्छतीनाम् ।
अथेङ्गितज्ञस्य मनस्विनीनां, दूतीजनस्यावसरो बभूव ॥ ६२

विद्वानपूर्वः सितरोचिरेषः, कृतव्यलीकैः सह कामुकैर्यः ।
लुप्ते प्रकोपेऽथ विसर्जनीये, सन्धिं विधत्ते स्म वधूजनस्य ॥ ६३

विभिन्नयोरह्नि रुषा रजन्यामुदञ्चदुच्चैरनुतापयोश्च ।
स्त्री-पुंसयोः सङ्गमनच्छलेन, प्रागप्रदा काऽपि बभूव भूयः ॥ ६४

मानार्गलां काऽपि विलङ्घ्य वेश्म, गन्तुं प्रवृत्ता दयितस्य यावत् ।
तावत् स एव स्वयमाजगाम, कामः किमिष्टं न करोति तुष्टः ॥ ६५

विलासवेश्माङ्गणमागतेषु, कृतापराधेष्वपि वल्लभेषु ।
मनस्विनीनामथ मानमुद्रां, भ्रूभङ्गशेषामकरोदनङ्गः ॥ ६६

निष्काश्य कामः प्रसभं प्रकोपं, पुनः प्रवेशं प्रतिषेद्धुमस्य ।
अङ्गानि सारङ्गविलोचनानां, चक्रे स्फुटं कण्टकवेष्टितानि ॥ ६७

किं नेत्रमार्गेण मनोज्ञरूपा, कर्णाध्वना वा मधुरं वदन्ती ।
नासापथेनाथ सपुष्पवासा, प्रियस्य चित्ते प्रविवेश काचित् ॥ ६८

अगस्तिभिः संव्यवहार्यतां गतैरनुज्ञयेव द्विजचक्रवर्तिनः ।
कान्तैः समं कान्तविलोचनाजनः, परिस्रुतं पातुमथोपचक्रमे ॥ ६९

कन्दर्पकेलिप्रथमप्रयोगसञ्जातलज्जामुकुलीकृतानि ।
तदा मदेन प्रकटीबभूवुर्मुग्धभ्रुवां विभ्रमचेष्टितानि ॥ ७०

---

१ °धिवेध° प्र० ॥ २ भङ्गः प्र० । भङ्गि वा० ॥ ३ नदन्ती मु० ॥ ४ °मथ प्रचक्र° प्र० ॥ ५ °र्बुर्वामभ्रुवां प्र० ॥

असाद्य कन्दर्पगुरूपदेशान्मद्यं महानन्दमिवाङ्गनाभिः ।
व्यावृत्तवस्त्वन्तरवासनाभिः, कृता किरीटेऽपि पतत्युपेक्षा ॥ ७१

मदाकुलानि प्रमदाकुलानि, विरेजुरापानगृहाङ्गणेषु ।
हृदि प्रविष्टस्मरचित्रपुङ्खदुःखादिवोद्घूर्णितमस्तकानि ॥ ७२

अधरैरधरीकृतं वधूनां, मधुमाधुर्यमवैमि विद्रुमाभैः ।
दयितैरत एव तेषु पानप्रतिपत्तिर्विहिता विहाय हालाम् ॥ ७३

परिजनैः प्रथमं गतमन्तिकादपसृतं वसनैर्जघनादथ ।
तदनु यातमथ त्रपया हृदः, स्थितमिहात्मभुवैव नतभ्रुवाम् ॥ ७४

आलिङ्गितायाः सुभगेन गाढमुद्गूढरम्भादलमार्दवेभ्यः ।
स्वेदोदबिन्दुच्छलतोऽपरस्याः, सुस्राव लावण्यमिवाङ्गकेभ्यः ॥ ७५

सकलमपि वपुर्विभिद्यमानं, मदनशरैरवलोक्य कामिनीनाम् ।
शरणमिव रदच्छदः प्रपेदे, प्रियवदनं यदलं प्रसह्य पातुम् ॥ ७६

मैरेयपानच्युतचेतनानां, तासामसाधारणविभ्रमाणाम् ।
नखाङ्कुशैरप्यनवाप्तसंज्ञो, गम्भीरवेदी मदनद्विपोऽभूत् ॥ ७७

आह्वातुं विषमशरं पुरोऽनुवाको, दोर्वल्लीवलयरवोऽभवद् वधूनाम् ।
तद्यज्वा मणितमभूच्च मोहनाग्निष्टोमेऽस्मिन् मधुमधुराधरौष्ठसोमे ॥ ७८

निगदितुं विधिनाऽपि न शक्यते, सुभटता कुचयोः कुटिलभ्रुवाम् ।
सुरतसंयति यौ प्रियपीडितावपि नतिं न गतौ च्युतकञ्चुकौ ॥ ७९

उपरतसुरतश्रमखिन्नियामासमयविराममनोरमैर्मरुद्भिः ।
सरसनखपदे हृदि प्रियाणामथ शयितः कृशमध्यमासमाजः ॥ ८०

अवनमदमृतांशुबिम्बमौलिर्गलितवया इव शर्वरी व्यराजत् ।
अभजत ककुभं च जम्भजेतुर्जतुरसरक्त इव प्रभाप्रवाहः ॥ ८१

यातः शीतरुचिः प्रतीचिजलधौ डिण्डीरपिण्डच्छवि–र्जृम्भारम्भमनोरमा कमलिनी सुप्तोत्थितेवाभवत् ।
वक्रत्वं च विधिर्विधूय सदयं चक्रेषु चक्रे मनः, सौरेणाजनि कुङ्कुमारुणमिव प्राचीमुखं रोचिषा ॥ ८२

देवोऽयं भुवनत्रयैकनयनं प्राप्तः प्रभागां प्रभुः, कर्ता यः कमलोदयं जगदिदं मोहाम्बुधेरुद्धरन् ।
प्रातस्त्यः समयो वयोविरुतिभिर्व्योमेति वर्धापय–न्नाचिच्छेद तदीयमन्धतमसव्याजेन संव्यानकम् ॥ ८३

**॥ इति श्रीगूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये चन्द्रोदयवर्णनो नाम सप्तमः सर्गः ॥ ७ ॥**



१ मदाकु॰ मु॰ ॥ २ ॰बिम्बच्छ॰ वा॰ ॥ ३ ॰लतः पर॰ प्र॰ ॥ ४ कुसुमशरं मु॰ ॥ ५ वाक्या, दो॰ वा॰ मु॰ ॥ ६ तद्याज्या मणि॰ वा॰ मु॰ ॥

## अष्टमः सर्गः ।

अथ पाथोजिनीनाथे, चुम्बत्याशां बिडौजसः । प्रबुद्धं पङ्कजेनेव, श्रियः पात्रेण मन्त्रिणा ॥ १

कोकद्वन्द्वं तदाऽऽलोक्य, सङ्गतं सम्ममाद सः । परकष्टे विनष्टे हि, सतां प्रीतिः प्रचीयते ॥ २

उन्मादं वीक्ष्य पद्मानां, कुमुदानां च मन्दताम् । क्षणिकत्वं विभूतीनां, चेतसा निश्चिकाय सः ॥ ३

कदाप्युदयति ध्वान्तं, कदाप्यर्कश्च धिग् विधिम् । तुल्यं नीचेऽप्यनीचेऽपि, स तदेति व्यतर्कयत् ॥ ४

करं चिक्षेप तीक्ष्णांशुर्दुस्तरे तिमिराम्बुधौ । प्रदातुमिव मग्नस्य, भुवनस्यावलम्बनम् ॥ ५

विच्छायास्तिमिरे तुच्छे, रेजुर्दीपाश्चलच्छिखाः । पङ्कीभूते पयःशेषे, स्फुरन्तः शफरा इव ॥ ६

तीक्ष्णैः सपदि भिन्दानः, कराग्रैस्तिमिरासुरम् । रोषेणेवारुणः पूषा, प्रादुरासीन्नृसिंहवत् ॥ ७

अथोज्जगाम वामत्वं, कुमुदेषु प्रदर्शयन् । विष्टपव्यवहारैकप्राड्विवाको दिवाकरः ॥ ८

मलिनीभवदाशान्ते, शान्ते ध्वान्तघनोदये । अब्जावतंसितं हंसो, नभःकासारमासदत् ॥ ९

न्यासीकृताः परं देशं, गच्छता भास्करेण याः । स्फुटं स्फटिकभूर्वह्निः, प्रतिदत्ते स्म ताँ विभाः ॥ १०

विवृतिर्विश्वसूत्रस्य, दशां निस्तिमिरौषधी । इष्टवार्ता च पद्मानां, दिद्युते द्युमणिद्युतिः ॥ ११

चकोरचक्रवालस्य, पीतशीतज्वरोदयाः । तमश्चक्रमधश्चक्रुश्चण्डरोचिर्मरीचयः ॥ १२

प्रसारितकरे सूरसिन्धुरेन्द्रेऽनुधावति । सुमेरुं परिबभ्राम, तमस्तोमः पुरःसरः ॥ १३

कुर्वाणः किरणाङ्कूरैरवतंसश्रियं दिशाम् । नभस्त्रिभागमागच्छदब्जिनीजीवितं विभुः ॥ १४

विलोललोचनाः प्रातर्मौलिमाल्यानि तत्यजुः । लोके हि कारणेनैव, गौरवं गुणिनामपि ॥ १५

हृदि प्रियवियुक्तानां, साञ्जना बाष्पबिन्दवः । मग्नानां मारबाणानां, पुङ्खा इव विरेजिरे ॥ १६

बभ्राजे भुजगाभासं, त्रासयंस्तिमिरोत्करम् । सुवर्णरुचिराकारः, सुपर्ण इव भास्करः ॥ १७

अथ धर्मैकनिष्णातो, निस्नातः शुचिभिर्जलैः । **वस्तुपाल**स्त्रिकालज्ञं, जगत्पूज्यमपूजयत् ॥ १८

वलक्षेणोत्तरीयेण, स बभौ बुद्धिमत्तरः । तुरीययुगर्भातेन, सुकृतेनेव संश्रितः ॥ १९

मत्सरज्वरसन्तप्तं, मन्ये मुक्त्वाऽन्यमानसम् । **आदिनाथः** स्थितस्तस्य, हृदि सौहार्दशीतले ॥ २०

भाले तस्य विभाति स्म, चान्दनी तिलकाकृतिः । कृता सुकृतिनां मध्ये, रेखा मुख्येव वेधसा ॥ २१

अलिङ्गितः शमेनेव, पृथग्भूतः कलेरिव । सद्वृत्तेनेव निर्वृत्तः, स तदा शुशुभे भृशम् ॥ २२

देवेन्द्रं स्तुवतस्तस्य, रेजुर्दशनदीप्तयः । तत्कालोन्मीलितानन्दसुधांशुकिरणश्रियः ॥ २३

दत्वा दानानि पात्रेभ्यो, नत्वा गुरुजनं च सः । सत्त्वाश्रितेन चित्तेन, भवं भावितवानिति ॥ २४

अहो ! संसारकारान्तर्मायानिगडितात्मनाम् । जायते जातु जन्तूनां, न कथञ्चन निर्वृतिः ॥ २५

केचिद् द्युम्नाय धावन्ति, प्रद्युम्नाय च केचन । नोद्युङ्क्ते कोऽपि धर्माय, सर्वाभिप्रेतहेतवे ॥ २६

मोदमानोऽन्तरात्मैव, साक्षी यत्कर्म शर्मणे । तमप्युपेक्षते धर्ममहो ! मूढमना जनः ॥ २७

यस्मिन् सन्निहिते वह्नि-विषाद्याः प्रभवन्ति नै । धर्मादप्यपरस्तस्मात्, कः शरण्यः शरीरिणाम् ? ॥ २८

धर्मसिद्धौ ध्रुवा सिद्धिर्द्युम्न-प्रद्युम्नयोरपि । दुग्धोपलम्भे सुलभा, सम्पत्तिर्दधि-सर्पिषोः ॥ २९

---

१ प्रनष्टे मु० ॥ २ पकीभू° प्र० वा० ॥ ३ ताः प्रभाः प्र० ॥ ४ °मानान्त° बा० ॥ ५ नो प्र० ॥

उच्चैर्गर्वे समारोप्य, नरं श्रीराशु नश्यति । दौःस्थ्यदत्तावलम्बोऽथ[1], स तस्मादवरोहति ॥ ३०

जितं लक्ष्मि ! त्वया यस्यै, जनस्तमपि सेवते । धनं निकारपूर्वं[2] यत्, प्रदत्ते प्रेतनाथवत् ॥ ३१

धनस्याधर्मलब्धस्य, मुग्धो लाभेन तुष्यति । सुकृतस्य दुरापस्य, न तु हानिमेवेक्षते[3] ॥ ३२

असाद्यते यया स्वर्गः, श्रिया सन्मार्गदत्तया । त्यक्त्वा तामप्यधर्मेण, मूर्खाः क्रीणन्ति[4] दुष्कृतिम् ॥ ३३

स्वयमुत्पादितां लक्ष्मीं, पुत्रीमिव मनीषिणः । दत्त्वा पात्राय तद्दानफलमेवोपभुञ्जते ॥ ३४

पित्राद्यैरुपभुक्ता या, पुत्राद्यैरपि[5] भोक्ष्यते । कामयन्ते न तां सन्तो, ग्रामवेश्यामिव श्रियम् ॥ ३५

तस्करैर्वा दुरीशैर्वा[6], हृतं संसहते धनम् । कदर्यो नैव सत्कार्ये, कल्पयत्यल्पमप्यदः ॥ ३६

अन्धा एव धनान्धाः स्युरिति[7] तथ्यं तथाहि ये । अन्योक्तेनाध्वना गच्छन्त्यन्यहस्तावलम्बिनः ॥ ३७

धनी धनात्यये जाते, दूरं दुःखेन दूयते । दीपहस्तः प्रदीपेऽस्ते[8], तमसा बाध्यतेऽधिकम् ॥ ३८

आदावेव विकारं यः, प्रदर्शयति देहिनाम् । भवोच्छेदैकभावेभ्यो, विभवः स्वाद्यते[9] स किम् ? ॥ ३९

न संसारस्य वैरस्यमिदं वेत्ति जडो जनः । यत् सुखं स सुखाभासो, यद् दुःखं दुःखमेव तत् ॥ ४०

रमयन्ति मनस्तावद्, भावाः संसारसम्भवाः । यावन्न श्रूयते साश्रुलोकैफूत्कारकाहला[10] ॥ ४१

अहो ! देहभृतां मोहः, प्ररोहति महानयम् । यदेते सुखमिच्छन्ति, विषयैर्दुःखहेतुभिः ॥ ४२

छत्रच्छायाच्छलेनामी, धात्रा चक्रे निवेशिताः । भ्रमन्तोपि स्वमात्मानं, मन्वते स्थिरमीश्वराः ॥ ४३

मदान्धास्ते परं लोकं, कथं, पश्यन्तु भूभुजः ? । तमोमण्डलमध्यस्थाश्छत्रच्छायाच्छलेन ये ॥ ४४

सुखं विषयसेवेति, सक्तास्तत्रैव जन्तवः । यः प्रमोदस्तु तत्त्यागात्, तदास्वादः क्वचिद् यदि ॥ ४५

अवश्यं नश्वरे देहे, दुर्दमे, च यमे द्विषि । हास्यमास्याद्[11] विनिर्याति, यत् पुंसामिदमद्भुतम् ॥ ४६

कालेन शौनिकेनेव, नीयमानो जनः पशुः । क्षिपत्येष धिगासन्ने, मुखं विषयशाद्वले ॥ ४७

कायः कर्मकरोऽयं तन्नात्र कार्याऽतिलालना । भृतिमात्रोचितो ह्येष, प्रपुष्टो विचिकीर्षते ॥ ४८

प्रयोजकान्यकार्येषु, नश्यन्त्याशु महापदि । दुर्मित्राणीव खान्येव, बन्धुबुद्धिरधीमताम् ॥ ४९

योऽयं जीवितभूतेषु, स्नेहग्रन्थिः सुतादिषु । विभोगावसरे[12] पुंसां, व्यक्तः सोऽपि भविष्यति ॥ ५०

दुःखाग्निर्वा स्मराग्निर्वा, क्रोधाग्निर्वा हृदि ज्वलन् । न हन्त ! शान्तिमायाति, देहिनामविवेकिनाम् ॥ ५१

अविद्यामेव सेवन्ते, हन्त ! विद्यां व्युदस्य ये । ते दूत्यामनुरज्यन्ते, वरारोहाविहायिनः ॥ ५२

तटस्थः प्रेक्षते योगी, जगदस्मिन् भवार्णवे । मज्जनोन्मज्जने कुर्वद्, दुष्कृतैः सुकृतैर्निजैः ॥ ५३

विषयामिषमुत्सृज्य, दण्डमादाय ये स्थिताः । संसारसारमेयोऽसौ, बिभ्यत् तेभ्यः पलायते ॥ ५४

सत्यं संसृतिगर्तेयं, दुःखैः पूर्णा निरन्तरम् । यतस्तव्द्यतिरेकेण, नान्यत् किञ्चिदिहाप्यते ॥ ५५

विधौ विध्यति सक्रोधे, वर्म धर्मः शरीरिणाम् । स एव केवलं तस्मादस्माकं जायतां गतिः ॥ ५६

सुचिरमिति विचार्य पुण्यचैर्याः[13], विदुषि चिकीर्षति तत्र तीर्थयात्राम् ।
विदधदथ पथैः[14] प्रशान्तपङ्कान्, ऋतुरपनृत्तमयूरमण्डलोऽभूत् ॥ ५७

---

१ °म्बोऽधः, स मु० ॥ २ निकारः पूर्वो यस्मिन् निधनमिति भावः, तच्च मरणम् **प्र० टि०** ॥ ३ °मपेक्ष° वा० मु० ॥ ४ क्रीडन्ति वा० मु० ॥ ५ °द्यैरुपभो° प्र० ॥ ६ दुराशै° मु० ॥ ७ °ति सत्यं त° मु० ॥ ८ गाढम् **प्र० टि०** ॥ ९ स्वदते प्र० ॥ १० °कफूत्कारकाहलः मु० ॥ ११ हास्यं नास्या° वा० मु० ॥ १२ विभवाव° वा० मु० ॥ १३ °चर्या मु० ॥ १४ पयःप्रशान्तपङ्कमृतुर° मु० ॥

भवमवरमिमं विमृश्य सम्यग्, गलितरसैर्विषयेषु वारिवाहैः ।
मुनिभिरिव निबद्धमौनमुद्रैर्गगनवनं विमलात्मभिश्च भेजे ॥ ५८

पतिरतितपति स्म वासराणामतिशुभति स्म विभावरीभुजङ्गः ।
जलमतिभजति स्म निर्मलत्वं, मधुरमतिध्वनति स्म राजहंसी ॥ ५९

पुलिनपरिसरे सरस्वतीनामजनि समागमनं सुखञ्जनानाम् ।
भवति यदवलोकनादनाविष्कृतहसितारिमुखं सुखं जनानाम् ॥ ६०

क्षितिवलयजयोजिहानवीरा, क्रमविरमज्जलपूरसिन्धुतीरा ।
शरदवतरति स्म मत्तहंसा, दिशि दिशि काशकदम्बकावतंसा ॥ ६१

कुटजविटपिनः प्रसूनशून्यानलिपटलं परिहृत्य सप्तपर्णैः ।
सममरमत दन्तिदानगन्धैर्जगति समृद्धमुपैति सर्व एव ॥ ६२

विदलितजगदापदः पयोदाः, परिगलिताम्बुविभूतयो बभूवुः ।
अहह ! न सहते महीयसामप्युदयमियं नियतिश्चिरायवैरा ॥ ६३

घनमयसमयात्यये विनिद्रः, ऋतुपुरुषो भवतीति तथ्यमेव ।
दधतुरपरथा कथं विकाशं, दिनपति-रात्रिपती तदीयनेत्रे ? ॥ ६४

सरसिसुरभिः सरःसमीरः, कैलमसमृद्धिसमुद्धता धरित्री ।
कलमपि कलहंसकामिनीनां, रसितमथ व्यथयाञ्चकार पान्थान् ॥ ६५

कलयति कलशोद्भवे प्रवेशं, मलयनगस्थगिते नभोविभागे ।
जगदगदमभूत् पयश्च पेयं, ननु महतामुदयो मुदे न कस्य ? ॥ ६६

स्तनितमुपरतं पयोधराणां, ध्वनिरजनिष्ट ककुद्मतां विशिष्टः ।
परिहृतमवनीतलं शिलिन्ध्रैर्जलमलमक्रियतारविन्दवृन्दैः ॥ ६७

गवलकुवलयप्रभैः पयोदैर्वियति वृते व्यथित व्ययं न यस्य ।
अधिपतिरतिमात्रमुष्णमह्नां, तदिव सुसञ्चितमुत्ससर्ज तेजः ॥ ६८

भासः सेव्याः श्वेतभासः प्रदोषे, लोकाह्लादोद्दीपिका दीपकाली ।
दुग्धैर्दिग्धा शर्करा यत्र पथ्यं, दिष्ट्या दिष्टः स प्रविष्टः पृथिव्याम् ॥ ६९

हंसानां नवनलिनीवनोत्सुकानामालापैरिव मुरजिन्मुमोच निद्राम् ।
जम्भारिस्त्रिभुवनभारमुत्थितेऽस्मिन्नारोप्य स्वधनुरथोपसञ्जहार ॥ ७०

स्वच्छं वारि निवारितामरधनुर्व्योम व्यपेताम्भसः, पाथोदाः समदा सितच्छदवधूराशाः सकाशाः पुरः ।
भाति स्म प्रथयन्नहम्प्रथमिकां तेजस्विपूत्तेजितः, श्यामाम्भोधरभस्मनेव शशभृद् दिक्कामिनीदर्पणः ॥ ७१

**॥ इति श्रीगूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचते कीर्तिकौमुदीनाम्नि महाकाव्ये परमार्थविचारो नामाष्टमः सर्गः ॥ ८ ॥**

---

१ विगलित॰ वा॰ मु॰ ॥ २ कमलस॰ वा॰ मु॰ ॥ ३ व्यथिते व्ययेन यस्य मु॰ ॥

## नवमः सर्गः ।

चिकीर्षिता श्रीसचिवेन तीर्थयात्राऽथ सोऽयं[1] समयः समेतः ।
महात्मनामीहितकार्यसिद्धौ, विधिर्विधत्ते हि सदाऽऽनुकूल्यम् ॥ १

धर्मैकमित्रोपनिमन्त्रणार्थं[2], तेनार्थिमित्रेण चराः प्रयुक्ताः ।
न केवलं स्वेन कृतार्थितेन, परैः कृतार्थैः कृतिनः कृतार्थाः ॥ २

रथानथाऽऽनन्दविसंस्थुलोऽयं, लोकः प्रयाणप्रवणांश्चकार ।
उपक्रमे पुण्यकृतां क्रियाणां, राभस्यमभ्यस्यति को न साधुः ? ॥ ३

पाथेयवन्तः पथि योग्ययुग्याः, सोपानहः सोदकभाजनाश्च ।
श्रीवस्तुपालेन समं जनौघाः, प्रयाणकाय प्रवणा बभूवुः ॥ ४

आकारितस्तेन कृतादरेण, दूरादपि श्राद्धजनः समेतः ।
ययुस्तदीयानि पुनर्यशांसि, दिगन्तरेभ्योऽपि दिगन्तराणि ॥ ५

समं समग्रैरपि बन्धुवर्गैर्निसर्गबन्धुर्विबुधव्रजस्य ।
शुभे मुहूर्तेऽथ शुभैर्निमित्तैर्मन्त्री स्वनाथानुमतः प्रतस्थे ॥ ६

पुरः प्रशस्तां फल-पुष्पहस्तां, प्रमोदमानः प्रमदां विलोक्य ।
निरन्तरायां पथि तीर्थयात्रां, मन्त्रीश्वरश्चेतसि निश्चिकाय ॥ ७

स्थितः क्षणं क्षीरतरोरधस्तात्, कृतानुवृत्तीन्[3] सुजनान् निवर्त्य ।
खरस्य वामं स्वरमध्वगामी, शुश्राव सुश्रावकचक्रशक्रः[4] ॥ ८

अक्षेषु नित्यं कृतनिग्रहोऽपि, जग्राह तांस्तान् नियमानमात्यः ।
स्वभावशुद्धाः सुधियो हि तेषां, पावित्र्यलाभाय तथापि लोभः ॥ ९

रथैस्तुरङ्गैः करभैर्महोक्षैर्जग्मुस्तदा केऽपि कथञ्चनापि ।
मन्त्रीश्वरे धर्मधराधुरीणे, तस्मिन् विशश्राम भरस्तु तेषाम् ॥ १०

न वाहनं यस्य स तस्य यानं, नासीद् धनं यस्य स तस्य वित्तम् ।
न चीवरं यस्य स तस्य वस्त्रं, कल्पद्रुकल्पः प्रददौ[5] पदव्याम् ॥ ११

भुङ्क्ते स्म सर्वेष्वपि भुक्तवत्सु, शेते स्म सुप्तेषु स यात्रिकेषु ।
प्रबुध्यते स्म प्रथमं तदित्थं, सङ्घप्रभुत्वव्रतमाचचार ॥ १२

प्रभूतभोज्यानि बहूदकानि, सगोरसान्युन्मदमानवानि ।
तस्यातिदुर्गेऽपि पथि प्रयाणान्युद्यानलीलासदृशान्यभूवन् ॥ १३

---

१ 'यं शरदा समे' मु० ॥ २ निबन्धनार्थं मु० ॥ ३ 'न् स्वज' प्र० वा० ॥ ४ 'शक्तः वा० कां० ॥ ५ 'दौ पृथिव्याम् वा० मु० ॥

यात्राप्रसङ्गेन जगाम येषु, पुरेषु पौरोच्छ्रिततोरणेषु ।
तेषामधीशैः सविशेषमेष, सम्मान्यमानः सममानयत् तान् ॥ १४

अभ्यर्थ्यमानः पथिकैरनेकैर्वस्तून्यनेकान्यपि **वस्तुपालः** ।
तेभ्यः प्रभूतानि पथि प्रयच्छन्, नाहङ्करोति स्म न कुप्यति स्म ॥ १५

गीतानि जैनान्[1]युचितानि गातुं, जनो जगौ वर्त्मनि मध्यमध्ये ।
प्रमोदपूरोद्गतरोमराजिर्निरन्तरं तस्य पुनर्यशांसि ॥ १६

अनुक्रमेण प्रसृता[2]ऽस्य साधोः, सा[3] धोरणी यात्रिकधोरणानाम् ।
वैमानिकैर्व्योमनि नाकिलोकैर्भूमानयष्टिप्रतिमा व्यलोकि ॥ १७

पुरश्च पृष्ठेऽपि च पार्श्वयोश्च, परिस्फुरन्तः खरहेतिहस्ताः ।
यात्राजनं वर्त्मनि तस्य शश्वदश्वाधिरूढाः सुभटा ररक्षुः ॥ १८

समुद्धृतैर्जीर्णजिनेन्द्रहर्म्यैर्नवैः सरोभिश्च सरोजरम्यैः ।
प्रस्थानमार्गः सचिवस्य सोऽभूदजानतामप्युपलक्षणीयः ॥ १९

यावन्ति बिम्बानि जिनेश्वराणां, श्वेताम्बराणां च कदम्बकानि ।
मार्गेषु तेषां मुषिताश्रितार्तिः, पूजां स निर्वर्त्य ततः प्रतस्थे ॥ २०

स पञ्चषैर्निर्विषमप्रपञ्चप्रयाणकैः प्रीणि[4]तसङ्घलोकः ।
धराधरं धर्मधुरन्धरः श्री**शत्रुञ्जयं** शत्रुजयी जगाम ॥ २१

आरुह्य सह्यादपि सुन्दरेऽस्मिन्नश्मोच्चये कश्मलमुक्तचेताः ।
मन्त्री मिलन्मर्त्यकृतोपमर्दं, **कपर्दिनं** नाम ननाम यक्षम् ॥ २२

स कर्दमैस्तस्य तनुं **कपर्दि**यक्षस्य यक्षोपपदैर्विलिप्य ।
पुष्पैरनेकैर्विलसद्विवेकस्त्रिलोकपूज्यस्य चकार पूजाम् ॥ २३

अध्वश्रमध्वस्तसमस्तपापभरेण भूरेणुभृता जनेन ।
शृङ्गावलिव्याप्तवियन्मुखोऽपि, सोऽयं सुखेनाऽऽरुरुहे म[5]हीध्रः ॥ २४

तत्राऽऽ**दिनाथ**स्य नमस्यमूर्तेः, [6]स्नात्रं च पूजां च विधाय मन्त्री ।
पुरः कुरङ्गीनयनाः प्रमोदन्[7]नृत्यन्मना नृत्यमकारयत् सः ॥ २५

संश्लिष्टमष्टापदपृष्ठपट्टे, तं दृष्टवान् विष्टपवन्दनीयम् ।
अमेयतेजोमयमण्डलस्थं, यथा पुमांसं परमं स मन्त्री ॥ २६

विरच्यमाने सचिवेन तेन, पूजाविधौ पूज्यतमस्य तस्य ।
सकुङ्कुमस्नानजलच्छलेन, गलन्निवाऽऽलोक्[8]यत भोगरागः ॥ २७

न केवलं केवलिचक्रवर्ती, हृच्चक्रवर्ती सचिवस्य सोऽभूत् ।
शुश्रूषयाऽप्येष विशेषवत्या, तत्याज नान्तःकरणं [9]तदीयम् ॥ २८

---

१ **जैनानुचि**° वा० ॥ २ °**सृतस्य** प्र० कां० ॥ ३ **साधारणी या**° वा० कां० । **सा धोरणिर्या**° मु० ॥ ४ °**तभव्यलो**° वा० मु० ॥ ५ **महीन्ध्रः** वा० । **महीन्द्रः** मु० ॥ ६ **स्नानं च** मु० ॥ ७ °**नृत्यात्मना** वा० मु० ॥ ८ °**क्य ततोऽङ्गरागम्** मु० ॥ ९ **यदीयम्** वा० मु० ॥

सर्वतोमुखतपोहुताशनै-र्यैर्हुतः स्मर इति क्व विस्मयः ? ।
निर्जितः पुरजिता पुरा यतो, नेत्रमात्रतुलिताग्निनाऽपि सः ॥ २५

गम्यते तपनरम्यतेजस-स्तस्य वन्दनविधित्सया गुरोः ।
देशनां समधिगम्य तन्मुखाद्, धर्मकर्मणि निधीयते मनः ॥ २६

इत्युदीर्य मतिभासुरः पुर-स्कृत्य कृत्यविदसौ सहोदरम् ।
कम्पयन् कलियुगं मनोरथै-राससाद वसतिं मुनीशितुः ॥ २७

द्वारमध्यमविशन्निषेधिका-मुद्गिरन् गुरुमवेक्ष्य तत्पुरः ।
बाष्परुद्धनयनः पदे पदे, सम्मदेन घनगद्गदोऽस्खलत् ॥ २८

दुःषमाविषमतापतापितां, वीजयन्निव धरामसौ चिरात् ।
अञ्चलेन करचञ्चलेन त-च्चक्रिवान् गुरुनमस्कृतिं कृती ॥ २९

दन्तदीप्तिपटलच्छलोच्छल-न्मूर्त्तिमत्सुकृतवर्मितामिव ।
विन्नुटद्दुरितराशिराशिषं, निर्ममे तदनु निर्ममेश्वरः ॥ ३०

सोऽभ्युदञ्च्य कथमप्यथ क्षिते-र्भक्तिभारनमितं शिरश्चिरात् ।
अग्रतो मुनिविभोर्व्यभूषयद्, युक्तमासनममुक्तवासनः ॥ ३१

आकलय्य मुखवस्त्रिकां मुख-द्वारि विस्फुरितदन्तदीप्तिवत् ।
देशनां सचिवभर्तुरग्रतः कर्तुमारभत सूरिशेखरः ॥ ३२

वीतरागमतधर्मकारिणः, साधुवृत्तगुरुभक्तिभासुराः ।
श्रावकाः कतिचिदाप्तभावना-दान-शील-तपसो भवन्ति चेत् ॥ ३३

दान-शील-तपसां विजित्वरी, भावनैव भवनाशिनी भवेत् ।
तां पुनर्विजयते प्रभावना, सा तु सम्पदि सुखेन साध्यते ॥ ३४

अस्थिराः करभिका इव श्रियः, पातयन्ति नरकावटे नरम् ।
कश्चिदेव निपुणं नियोजकं, लङ्घयन्ति विकटां भवाटवीम् ॥ ३५

श्रावकत्वममलं कुलं कला-चक्रवालमपि कश्चिदुद्वहन् ।
सम्पदा ललनयेव लोलया, पीतमद्य इव मोह्यते जनः ॥ ३६

श्रीलता शुचितरेषु रोपिता, स्थानकेषु समये यथाविधि ।
पुष्पिताऽद्भुततरैर्यशोभरै-राशु पुण्यफलहेतवे भवेत् ॥ ३७

न स्थिराः क्वचन यान्ति खण्डशः, सम्मिलन्ति रसवत् कथञ्चन ।
सम्पदः प्रकटितप्रभावनाः, कस्यचिद् यदि भवन्ति सिद्धये ॥ ३८

पावयन्ति परिक्लृप्तभावना-दान-शील-तपसः स्वमेव तत् ।
विश्वशासनविकाशदीपिकां, व्यातनोति विरलः प्रभावनाम् ॥ ३९

जल्पितानि बहुशः प्रभावना-कारणानि मुनिभिः पुरातनैः ।
उत्सवो भवति तीर्थयात्रया, तेषु शेखरमणिस्तु निस्तुषः ॥ ४०

सिद्धलोक इव सङ्घतां गतः, पूज्यते ननु जनो जिनैरपि ।
धन्य एव स तु तीर्थयात्रया, कोऽपि सङ्घपतितां बिभर्त्ति यः ॥ ४१

दिक्पुरन्ध्रिकुतुकाय कस्यचिद्, रौप्यदर्पणनिभो यशश्चयः ।
सङ्घसङ्घटितरेणुमार्जना-दिन्दुधामधवलो विलोक्यते ॥ ४२

सङ्घभर्तुरधिरोपितस्तथा, वर्द्धते सपदि पुण्यपादपः ।
दर्शयत्यमृतसन्निभं यथा, विष्टपत्रितयमौलिगं फलम् ॥ ४३

**नागेन्द्र**गच्छमुकुटस्य मुनेरनून-माकर्ण्य कर्ण्यमिति मन्त्रिपतिर्विचारम् ।
नत्वा स्वधामनि जगाम जिनेन्द्रयात्रा-निर्माणनिर्मलमनोऽतिमनोरथश्रीः ॥ ४४

किञ्च—

वितन्वाते विश्वाङ्गणसदसि यावत् तव यशः-
प्रतापाभ्यामभ्युल्लसितरुचिवादं विधु-रवी ।
भज स्थैर्यं **सोमा**न्वयतिलक ! तावत् क्व सुकृतैः,
कृतैर्लभ्यः सभ्यस्त्वमिह गुण-दोषैकनिकषः ? ॥ १

ईदृक् कश्चिद् विपश्चिज्जनमनसि चमत्कारकारी पुराऽपि,
क्वापि प्रापि प्रबुद्धे वसुमति सुमति**र्वस्तुपाल**स्य तुल्यः ।
येन क्षीरार्णवार्णश्चयसिचयजुषः सिद्धसिन्धूत्तरीय-
श्रीविस्तारोत्तराया व्यरचि शुभरुचिः कीर्त्तिभिः कञ्चुकस्ते ॥ २

सचक्रनन्दकपुरोगदयाद्भुतश्री-स्त्वं **वस्तुपाल** ! पुरुषोत्तम ! जिष्णुरेव ।
तद् दूयते तु हृदि मेऽन्वहमेव शङ्खो, यत् **सिन्धुराज**तनुभूर्न करे गृहीतः ॥ ३

कविर्न को निस्तुष**वस्तुपाल**-यशःसुधाविद्धरसं रसज्ञः ।
प्रबन्धमास्वादयतेऽ**रिसिंह**-मुखारविन्दैकमरन्दमेनम् ? ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मि**न्नरिसिंह**विनिर्मिते । इमान्यकृत चत्वारि, काव्यान्य**मरपण्डितः** ॥ ५

**॥ इति सुकृतसंकीर्त्तननाम्नि महाकाव्ये धर्मोपदेशनो नाम चतुर्थः सर्गः ॥ ४ ॥**



१ ख-ग-'धवलोऽवलो' ॥ २ ख-'ल्लसिरुचिविवादं ॥

स तीर्थयात्रासु मनोमनोरथं प्रकाशयन् सम्मदमेदुरोद्यमः ।
पुरे पुरे श्राद्धजनाय नायको, विवेकभाजां लिखितान्यलीलिखत् ॥ १

अवाहनानामपि वाहनावली-मशम्बलानामपि शम्बलं बली ।
अकिङ्कराणामपि किङ्करान् कृती, वितीर्य सङ्घे समवीवहद् बहून् ॥ २

अदोषधीर्मन्त्रिपतिस्तदौषधी-रमीमिलद् विश्वरुजां विजित्वरीः ।
बभूव ताभिर्भृशमौषधीपतिः, स कौमुदीकोमलकीर्त्तिकारणम् ॥ ३

वृथैव वैद्याननवद्यवैभवान्, समं स मन्त्री जगृहे महेच्छया ।
प्रभूष्णुसङ्घक्रमरेणुराशिजं, तदाऽखिलंव्याधिहरं तमोऽपि यत् ॥ ४

न यद्यपि प्रौढवृषप्रभावतो, भविष्यति स्पृष्टमनोभिदा क्वचित् ।
परोपकाराय तथाऽप्ययं कृती, **युगादिसर्वज्ञ**कृताग्रहोऽभवत् ॥ ५

अथासितीव्रव्रतनिर्जितान्तर-द्विषो भवाम्भोनिधिकुम्भसंभवान् ।
मठेषु गत्वा स्वयमद्भुतादरः, समं शमीन्द्रान् समवाहयत् कृती ॥ ६

सतां पतिः सङ्घपतित्वरोपणा-भिषेकमासाद्य गुरोः कराम्बुजात् ।
शुभे मुहूर्त्तेऽद्भुतवाहवाहिनी-वृतोऽचलच्चन्दनचर्चिताकृतिः ॥ ७

ततश्चतुर्विंशतितीर्थकृत्कला-कलादितीर्थङ्करदेवतालयः ।
चचाल नृत्यादिविनोदतत्परः, प्रजामुदश्रुस्नपितेन वर्त्मना ॥ ८

पिबन् पयः स्वःसरितो वियद्वने, शशाङ्ककान्तीस्तृणुते तृणोपमाः ।
विशृङ्खलो यस्य यशःकिशोरकः, समं त्रिगोत्रैकगुरुस्ततोऽचलत् ॥ ९

अथानुचेलुर्**नरचन्द्रसूरयो**, लसत्त्रसस्तोमविलोकनच्छलात् ।
दशैव सिञ्चन्त इवाद्भुतक्षमां, प्रयाति सङ्घे वसुधां सुधान्तया ॥ १०

अथाचलन् **वायटगच्छ**वत्सलाः, कलास्पदं श्री**जिनदत्तसूरयः** ।
निराकृतश्रीषु न येषु मन्मथः, चकार केलिं जननीविरोधतः ॥ ११

भवाभिभूतेन मनोभुवा भया-दनीक्षितैः क्लृप्तभवाभिभूतिभिः ।
अचालि **सण्डेरकगच्छ**सूरिभिः, प्रशान्तसूरैरथ **शान्तिसूरिभिः** ॥ १२

शरीरभासैव पराभवं स्मरः, स्मरन्ननश्यत् किल यस्य दूरतः ।
स **वर्द्धमाना**भिधसूरिशेखर-स्ततोऽचलद् **गल्लक**लोकभास्करः ॥ १३

सहस्रशीर्षोरगकल्पकीर्त्तयः सहस्रधामप्रतिमानतेजसः ।
सहस्रनेत्रप्रमुखामरस्तुताः, सहस्रशोऽन्येऽपि च सूरयोऽचलन् ॥ १४

चतुर्दिगापूरणभूरिनिःस्वन-श्चतुःसमुद्रान्तमहीतलागतः ।
ततश्चतुर्थव्रतनिश्चलोऽचल-च्चतुर्विधः सङ्घजनो यथाविधि ॥ १५

वितन्वतः कासहृदाख्यपत्तने, महोत्सवं नाभितनूजसद्मनि ।
सहायतां प्रत्यशृणोन्महामते-रमुष्य दृग्वर्त्मनि देवताऽम्बिका ॥ १६

अथास्य सङ्घस्य विसर्पतोऽग्रतः, शताङ्गचक्रोचितचीत्कृतस्वनः ।
नदन्महोक्षध्वनिवर्मितोऽपि सन्, हयालिहेषाभिरलाभि लाघवम् ॥ १७

पवित्रमेतत् तिलकाय नित्यशः, परस्परस्पर्द्धिभिरूद्र्ध्वमुत्सुकैः ।
तदा सदारैः समवापि दैवतैः, मुदैव तैः सङ्घविहारजं रजः ॥ १८

अभूत् तदा सङ्घपदाभिषङ्गत-स्तथा कथञ्चिद् विरजस्तमा मही ।
यथाधिरूढाऽपि शिरस्यहीशितु-श्चकार नो भारमुदारविग्रहा ॥ १९

विभेद्य लोभेन धवान् धवान्तरै-र्यया प्रपेदे प्रतिघातपातकम् ।
पवित्रिता सङ्घपदैर्दिवं ययौ, मही स्वदेहेन रजोमयेन सा ॥ २०

महानयं सङ्घजनोऽचलत् कथं, धरिष्यथ क्ष्मामिति जल्पितुं तदा ।
गतैः समीपं किल रेणुभिः ककुप्-करेणुभिर्मङ्क्षु मदो निराकृतः ॥ २१

रजस्तदा विस्तृतसङ्घसम्भवं, नभोनदीतीरगनीरगर्भितम् ।
इहापि गङ्गामृदलाभि दुर्लभे-त्यकर्षि सप्तर्षिभिराशु हर्षिभिः ॥ २२

द्विजेश्वरश्रीहतिपातकादिव, द्रुतं दिवः पातिभिरर्कभानुभिः ।
पवित्रसङ्घक्रमरेणुसङ्गमा-दसङ्गमूद्र्ध्वैव गतिः स्म तन्यते ॥ २३

विसर्पता सङ्घजनेन मेदिनी, पवित्रिता प्रत्युपकारिणी ततः ।
उदस्य धूलीस्तपनातपं व्यधाद्, व्यधाच्च तूर्णं सुतरास्तरङ्गिणीः ॥ २४

चलाचलायां भुवि सङ्घसङ्गमात्, तदा तरन्त्यामिव धर्मवारिधौ ।
जगद्गुरोऽस्माकमवातरत्तरा-मिति स्म नृत्यन्ति मुदा महीभृतः ॥ २५

अथाघशल्यानि निरासितुं रया-दनेन सङ्घेन परोपकारिणा ।
शताङ्गचक्रप्रधिलीलयाऽवनि-र्विदार्यमाणा सरवं व्यकम्पत ॥ २६

अमुष्य सङ्घस्य विलङ्घनक्रियां, वितन्वतोऽपि क्रमशौचकर्मठः ।
स्फुटस्फुरत्फेननिभेन भेजिवान्, शुचीनि पुण्यानि तरङ्गिणीगणः ॥ २७

क्रमक्रमस्थापितवारि-शर्करा-करम्ब-वालुङ्कविभूषितप्रपः ।
स्थितं गृहक्रोड इव प्रमोदिनं, निनाय मन्त्री जनमित्थमध्वनि ॥ २८

सृजन् जनः पूजनमुत्सवोत्सुकः, पुरे पुरे तीर्थकृतां कृताञ्जलिः ।
अलं व्यलङ्घिष्ट महीं महीयसी-मसीमसम्भावितभावनाद्भुतः ॥ २९

समीपसङ्केतनिकेतनं शिव-श्रियो वियन्मानसमुन्नतं ततः ।
पुरः पुरं धर्मनृपस्य पश्यति, स्मितः स्म शत्रुञ्जयपर्वतं जनः ॥ ३०

अगण्यपुण्यैर्भवसिन्धुपारभू-रभूदयं लोचनगोचरो गिरिः ।
इति स्मयस्मेरहृदो विदस्तदा, ससम्मदाश्चक्रुरहो ! महोत्सवम् ॥ ३१

गतोऽग्रतोऽस्मिन् दुरितैरनाविलो, विलोक्य **नाभेयनिकेत**केतनम् ।
जनस्तदा शर्मरसोर्मिविक्लवो, मदान्न किं किं रचयाञ्चकार सः ? ॥ ३२

ननर्त्त कश्चित् पृथुसम्मदस्तदा, सलीललोलायितपाणिपल्लवः ।
प्रतिप्रतीकं परितः कुतूहला-दलं यथाऽऽलोक्यत पुण्यसम्पदा ॥ ३३

बहूत्पतत्पादयुगस्तदाऽपरो, ननर्त्त दूरप्रसरत्करच्छदः ।
विधातुमुड्डीय नगाधिरोहणं, मनोरथी पत्त्ररथीभवन्निव ॥ ३४

भवभ्रमिश्रान्ततरः शिरोधरा-ऽधिरोपितं पापभरं त्यजन्निव ।
इलामिलन्मौलिरमन्दसम्मदो, ननाम विश्रामविधित्सया परः ॥ ३५

विलोकयन् कोऽपि वृषध्वजध्वजं, मुहुर्मुहुर्मङ्क्षु नमन्नमन्दधीः ।
उदञ्चित-न्यञ्चितमौलिलीलया, रराज मुक्तिश्रियमाह्वयन्निव ॥ ३६

अमुत्र **शत्रुञ्जयशैल**सन्निधौ, भवार्णवस्येव तटे तदा परः ।
निरीयितुं पातकजातकर्दमा-ल्लुलोठ सर्वाङ्गमुदारधीर्मुदा ॥ ३७

समुद्भवद्भावरसादचेतन-श्चिराय नृत्यादिविवेकवर्जितः ।
परः शिलापुत्रसमोऽपि बाष्पवा-नमोचि रिष्टैरपि रिष्टशङ्कितैः ॥ ३८

इहाथ पाथस्तृणराजिराजिते, जितेन्द्रियो मन्त्रिपतिर्महीतले ।
श्रमापनोदार्थमदापयत् तदा, निवासमासन्नममुष्य भूभृतः ॥ ३९

अथाव्रजत् खिन्नजलप्रमोदिनो, दिनोपतापे सचिवः स किङ्करान् ।
मरुत्वरान् प्रैषयदेष तत्क्षणं, शिखिच्छदच्छत्रविडम्बिताम्बुदान् ॥ ४०

सुवंशसंयोजितरूपशोभिता, विचित्रिता धातुरसेन सर्वतः ।
पदे पदे पर्वतपादसोदरा, वितेनिरे पीवरचीवरालयाः ॥ ४१

अनांसि धर्मक्षितिपस्य वप्रवत्, पदे पदे मण्डलितानि रेजिरे ।
तृणं द्विषत्पापमिवोदमूलयन्, यतो विनिस्सृत्य वृषा भटा इव ॥ ४२

गिरौ गतिं पश्यत नः कुतूहलात्, कथं वृथा मुञ्चत भूतले समे ? ।
इतीव चाटूक्तिकृतस्तृणं मुखे, वृषा न्यधुर्बध्नति सारथौ पुरः ॥ ४३

नेयेन सङ्घस्य रसातलं यया, कथं समाकृष्यत साऽपि भिन्महे (?) ।
नवीनचुल्लीविवरापदेशतः, खनन्ति भूखण्डमिति स्म किङ्कराः ॥ ४४[1]

---

[1] क–ख पुस्तके ४४ तमं काव्यं नास्ति ॥

प्रवृत्तनृत्ताः प्रेचलोर्मिपाणिभिः, प्रणीतगीताः कमलास्यषट्पदैः ।
तदा व्यधुः स्वागतमागते जने, विदम्भमम्भःप्रसरेण सिन्धवः ॥ ४५

तदाऽन्नपाकाय विकाशितः शिखी, ज्वलन् बभौ सङ्घजने निवासिनि ।
भरानमद्भूमिभिदास्फुटस्फुर-त्फणीन्द्रचूडामणिरश्मिराशिवत् ॥ ४६

अथैष तीर्थङ्करदेवतालय-प्रक्लृप्तमध्यन्दिनपूजनो जनः ।
मुदा नमस्कृत्य गुरुक्रमद्वयं, प्रचक्रमे शाश्वतकृत्यकेलिषु ॥ ४७

अदायि दीनाय तदा धनं तथा, मनोरथातीतमनेन मन्त्रिणा ।
यथा परे निश्चयदायिनो जना, वनीपकानामपि चाटु चक्रिरे ॥ ४८

स्वयं स कस्मैचन मोदकादिकं, घृतादि कस्मैचन शुद्धवासनः ।
फलादि कस्मैचन साधवे ददत्, तदा विशश्राम न मन्त्रिशेखरः ॥ ४९

अकिञ्चनः कश्चन याचते क्वचित्, किमप्यहो ! शब्दमिति प्रदाप्य सः ।
चकार भोज्यादिकमात्मना कृती, तृतीययामक्षणपूरितेक्षणः ॥ ५०

अथ कृततनुकृत्यः कौतुकोत्तानचेता, जिनपदमनुसङ्घः क्लृप्तसङ्घट्टमागात् ।
इह महमहिमांशुर्द्रष्टुकामो निकामं, गगनगमनखिन्नः प्रत्यगद्रौ निषण्णः ॥ ५१

किञ्च—

पायं पायमहर्निशं रिपुयशःपीयूषपूरं भवान्,
कल्पायुः क्षितिकल्पवृक्ष ! भवताल्लक्ष्मीलतालिङ्गितः ।
श्रीसोमान्वयसोममौक्तिकमयैरेव प्रसूनैरिव,
त्वत्कीर्त्तिप्रकरैरपि त्रिभुवनं सौरभ्यमभ्यस्यतु ॥ १

मात्यमात्यवर ! नाम्बरे यशः, श्रीवसन्त ! तव सन्ततस्मितम् ।
इत्यनन्यमहिमानमानशे, मानसाश्रयमहो ! महीयसाम् ॥ २

समुच्छ्रिताभिः खलु वस्तुपाल-प्रतापदीपाञ्जनमञ्जरीभिः ।
इहोपकण्ठस्थितिभाजि शङ्के, मालिन्यमुन्मीलितमुज्ज्वलेऽपि ॥ ३

श्रीवस्तुपालप्रथितप्रसादा-दासन् प्रमोदामृतवारयो याः ।
एतत्प्रबन्धच्छलतोऽरिसिंह-स्ता एव मूर्त्ता स्तबकीचकार ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

**॥ इति सुकृतसंकीर्त्तननाम्नि महाकाव्ये सङ्घप्रस्थानो नाम पञ्चमः सर्गः ॥ ५ ॥**



---

१ ग-प्रचलो° ॥ २ ग-समुत्थिता° ॥

जिनमहमहिमानं प्रत्यदीयन्त दूरा-दथ वलयितवृन्दं रासकाः श्राविकाभिः ।
तनुसदननिषण्णक्रूरकाकोलकाल-स्फुरितदुरितजालत्रासकृत्तारतालम् ॥ १

करकिशलयलीलालोलतालप्रणादो-ल्लसितलयविनोदानन्दनिर्मग्नचित्तः ।
जिनवदनविलोकव्यग्रदृग् भाविलोकः, प्रतिपदमभिरामं गीतमङ्गीचकार ॥ २

गतमदनमदानां भाविनामत्र भावा-न्तरितरसतरङ्गैरङ्ग ! चित्तं हरन्ती ।
लयविलुलितहारैरङ्गहारैर्मृदङ्ग-ध्वनिजनितविनोदं नर्तकी नृत्यति स्म ॥ ३

अशिथिलपदपातं प्रीतिपूर्णे जनेऽस्मिन्, नटति झटिति भेजे भूरियं भूरिकम्पम् ।
शिथिलकरकदम्बः प्रत्यगद्रेः पतित्वा, तदिव दिवसनाथः सिन्धुपाथस्यमज्जत् ॥ ४

पतितवति पतङ्गे रङ्गदुत्तुङ्गताप-व्यतिकरकृति सद्यः प्रीतिहृद्या इवाऽऽशाः ।
तुहिनमहसि कामं रन्तुमागन्तुकामे, खगकुलतुमुलेन भ्रेजिरे कौतुकिन्यः ५

हरगलगरलाभं व्योम्नि काष्ठान्तराल-ज्वलदविरलसन्ध्यावह्निविध्यानहेतुः ।
शबलममलरत्नैरुत्पपातार्कतापा-ज्जलमिव जलराशेरन्धकारं सतारम् ॥ ६

विषमलिमिषमास्ये न्यस्य मूर्च्छामगच्छन्, परिमिलितदलालीचक्षुषः पद्मखण्डाः ।
प्रियसुहृदि गतेऽस्तं भास्वति ब्रह्मचर्य-व्रतमविरलशोकः कोकलोकश्च भेजे ॥ ७

स्वदिवसपरिवृत्तिज्ञानतः क्वापि यातः, प्रसरति रिपुरूपे ध्वान्तपूरेऽपि सूरः ।
अथ गुरुगिरिदुर्गान् प्राप्य भासस्तदीया, दिशि विदिशि बबन्धुर्बन्धुतामोषधीभिः ॥ ८

अतुहिनमहसेव स्वैरवैरप्ररोहा-दपगिरिगरीयःकुञ्जगुप्तेन मुक्ताः ।
अहह ! दहनदीप्ता दीपदम्भेन भेजु-र्दिशि तिमिरौघं भल्लयः शल्लयन्त्यः ॥ ९

प्रथमसमुदितेन्दुज्योतिपूर्णेयमुद्घा-टितविकटकपाटद्वारवत् पूर्वकाष्ठा ।
मुदमतनुत साक्षादन्धकारान्धकारा-गृहकुहरगतस्यामुष्य विश्वस्य मुक्त्यै ॥ १०

द्युमणिमणिगणैर्यत्किञ्चिदप्यह्नि वह्नि-द्युतिततिभिरदाहि क्ष्मारुहादि क्षणेन ।
इह तदपि तदानीं जीव्यते स्म त्रियामा-रमणमणिसुधाभिः सर्वतः पर्वतेषु ॥ ११

अहनि दहनकीलाभैरवैः कैरविण्य-स्तरणिकरणजालैर्मूर्च्छितातुच्छमूर्च्छाः ।
विधुरुचिमधुसेकैश्छेकलोलालिबाल-व्यजनपवनलीलावीजनैरप्यजीवन् ॥ १२

समदमदनभूभृन्नव्यसाचिव्यलब्धि-प्रगुणितगुणमब्धिर्नन्दनं चन्द्रमेनम् ।
तरलतरतरङ्गोत्तुङ्गदुत्तुङ्गबाहुः, परिचितपरिरम्भारम्भमभ्युत्पपात ॥ १३

उडुगणमिषमुक्तव्यक्तमुक्ताकलापं, गजदनुजमिवेन्दुर्ध्वान्तमुच्छिद्य सद्यः ।
हृदि तदजिनखण्डं लक्ष्मलक्षेण बिभ्रद्, व्यहरत हरमूर्तिर्मूर्ध्नि धात्रीधरस्य ॥ १४

भृशमुरसि कलङ्कच्छद्मना कालचित्रौ-षधिमधित निबद्धामोषधीनामधीशः ।
अपि पिबति चकोरीचक्रवाले कराले, तदिव न दिवि नेशुर्भासुरास्तस्य भासः ॥ १५

विरहशिखिसमीरः कामनासीरवीर-स्तिमिरतरुकुठारः पूर्वदिक्‍तारहारः ।
गगनगजनिषादी कामिनीचक्रवादी, सितरुचिरुदितोऽयं वर्धयन् वार्धितोयम् ॥ १६

इभकुलमिभमल्लोद्भासि कैलासशैला-कृतिमकृत नगौघं शेषवच्छेषसर्पान् ।
रुचिरमृतमरीचेः सङ्घभर्तुर्यशःश्री-रिव धवलितविश्वा जाह्नवीं निह्नुवाना ॥ १७

वियदहनि वितेने स्वस्य विश्वस्य सङ्घ-क्रमसमुदितधूलीमण्डलैर्मण्डनं यत् ।
सुकृतमिदमिदानीं मूर्तमभ्युद्यदिन्दु-द्युतिनिभमिति लेभे भिन्नमालिन्यमालम् ॥ १८

चिरमुपचितहर्षः सङ्घलोकावलोका-दिव कृतसुकृतोऽयं व्योमचूडावलम्बी ।
सहजनिजकलङ्कन्यत्कृतिभ्राजमाना-कृतिरकृत न केषां विस्मयं शीतरश्मिः ? ॥ १९

निशि नियतमियत्यामप्यमुं सङ्घलोकं, कृतमहमिह भक्त्या जागरूकं विलोक्य ।
इयमधुनुत मौलिं विस्मिता व्योमलक्ष्मीः,कुसुममिव तदाऽस्मान् मन्दमभ्रश्यदिन्दुः ॥ २०

गिरिशिरसि जिनेशं नन्तुकामस्य मा स्या-महमहह ! महत्त्वादस्य यात्रान्तरायः ।
इति विसृमरभावभ्राजमानक्षणस्य, क्षणमपि न तमिस्रा सङ्घलोकस्य जाता ॥ २१

चलितसकलतारालोकमामुक्तसन्ध्या-दहनमिह विहायोमण्डलं द्राग् विहाय ।
सहजमहसि सूरे हन्तुमागन्तुकामे, परमपरमहीभृद्दुर्गमिन्दुर्गतोऽयम् ॥ २२

सजलजलदचारुर्वारुणीरागभाजः, क्षितितललुठितस्यामुष्य मुक्ताम्बरस्य ।
सृमरतिमिरवेषो यज्वनां भर्तुरेष, त्रिभुवनभवनान्तर्दुर्यशोराशिरासीत् ॥ २३

स्फुटघटितकलङ्को यज्वनामेष भर्त्ता, त्यजति करगृहीतामप्युषां भूरिभुक्ताम् ।
इति बत ! कुमुदिन्यः सारसौरम्यलोभा-गतमधुपधवेषु व्यादधुर्बन्धसन्धाम् ॥ २४

हरिहरिति रथाङ्गानल्पसङ्कल्पकल्प-द्रुम इव दिवसेऽस्मिन्नुद्गमारम्भभाजि ।
जलधिसविधगुप्तादंशुमद्बिम्बबीजा-दुदयत मृदुतेजःकैतवादङ्कुरोऽयम् ॥ २५

पतितवति पयोधेरन्तरा हन्त ! रात्रि-प्रिययुवतिविभेदाद् दुःखभाजि द्विजेन्द्रे ।
द्विजततिरतितारं निर्ममे तारकाणां, पथि कलकलमुच्चैरुच्चरन्ती चिराय ॥ २६

भृशमुषसि तुषारस्यन्दसङ्काशतारा-वलिवलयितनीलध्वान्तदूर्वावणौघः ।
गगनपथविहारोच्छृङ्खलैरस्खद्भि-स्तरणिकरकिशोरैर्जग्रसे मुक्तमुक्तैः ॥ २७

भुजगजगति [1]भूतिं भोगिचूडामणीनां, भुवि भवनमणीनामम्बरे तारकाणाम् ।
सपदि विपदमेता निन्यिरे भू-र्भुवः-स्व-स्त्रयविवरविलासव्यापृता भानुभासः ॥ २८

मसृणघुसृणक्लृप्तश्चन्द्रलेखानुकारी, तिलक इव समुद्यन् प्राग्दिशः सूर्यलेशः ॥
अयमभजत जम्भारातिकुम्भीन्द्रकुम्भ-स्थलविलुलितलीलाशातकुम्भाङ्कुशाभाम् ॥ २९

जलनिधिजलमध्यात् तुङ्गशैलाग्रजाग्र-त्करपरिचयशक्त्या भानुरभ्युज्जगाम ।
सपदि विपदपेतं कान्तमेनं विलोक्य, प्रहसितमुखपद्मा पद्मिनी नृत्यति स्म ॥ ३०

---

१ ग-भूतिर्भो° ॥

अवतमसततीनां मृत्युकालोऽपमृत्युः, कुवलयवलयानां जीवितं पङ्कजिन्याः ।
अलमकृत नभोऽङ्कं कोकलोकस्य सीता-विरहितहरिशापानुग्रहोऽयं ग्रहेशः ॥ ३१

दयितमिति पुरस्ताद् वीक्ष्य भानुं युवानं, हरिहरिति हरिद्रारागमागःप्रकोपात् ।
स्फुटकमलमुखेभ्योऽमोचि निःश्वासधूमा-वलिरलिनिकुरुम्बच्छद्मना पद्मिनीभिः ॥ ३२

अजनि गिरिनितम्बे बिम्बमर्कस्य धातु-च्छुरितमिव सरागं सूर्यकान्ताग्नितप्तम् ।
करजलपरिधौतं चुम्बितं चाम्बरेण, क्षणघटितसुवर्णादर्शवद् दिग्वधूनाम् ॥ ३३

सममसममयूखैर्भानुमन्तं लसन्तं, गिरिशिरसि विलोक्याऽऽलोकनीयप्रभावम् ।
स इव सचिवभर्त्ता सङ्घलोकेन साकं, विमलगिरिशिरोऽग्रं गन्तुमभ्युत्सुकोऽभूत् ॥ ३४

सद्यो जिनक्रमनमस्कृतिलोलसङ्घ-सङ्घट्टलोलवसुधातलसम्भ्रमेण ।
श्रीवस्तुपालगुणहृष्ट इवाचलोऽपि, शत्रुञ्जयः स्वयमकम्पयदेष मौलिम् ॥ ३५

किञ्च—

नित्यं त्वद्वदनारविन्दसदनं वाग्देवता सेवते,
त्वं पद्माश्रयभासुरोऽसि जयति त्रैलोक्यसूत्रं त्वयि ।
श्रीमच्चण्डपगोत्रमण्डन ! गुणैरेभिर्भवान् ब्रह्मणः,
साधर्म्यं वहति प्रियंवद ! मदाशीर्भिस्तदायुर्भव ॥ १

अलभत बत ! यस्मिन् सान्द्रदारिद्र्यपूर्णे, गृहपतिरवकाशं न प्रदोषक्षणेऽपि ।
वितरति सति वित्तं वस्तुपाले कवीना-मिह गृहकुहरान्तर्नैष रत्नाकुलेऽपि ॥ २

श्रीमन्त्रीश्वरवस्तुपाल ! भुजयोर्युग्मेन युद्धार्णवं,
तूर्णं निस्तरतोऽपि ते समभवन्न व्याकुलत्वं किल ।
यद्दूरादवगण्य निर्मलगुणं शङ्खं त्वया मौक्तिक-
स्तोमानामिव धैर्यधुर्य ! यशसां चक्रे महान् सङ्ग्रहः ॥ ३

श्रीवस्तुपालसचिवेन्द्रयशःप्रसून-माल्येऽरिसिंहकविना गुणगुम्फितेऽस्मिन् ।
कण्ठे सतां लुठति निर्मददुर्जनाली-वक्त्रप्रभाः कति न बिभ्रति भृङ्गभावम् ? ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

॥ इति सुकृतसङ्कीर्त्तननाम्नि महाकाव्ये सूर्योदयवर्णनो
नाम षष्ठः सर्गः ॥ ६ ॥



शैलमौलिगमनाय मनोऽश्वै-र्भ्राजमानमसमानविहारैः ।
प्रापदस्खलितमप्यसमेषु, द्राग् मनोरथरथं पथि सङ्घः ॥ १

भूरिधातुमयजङ्गमशृङ्ग-श्रेणिवद्विविधचीरविचित्रः ।
मन्दमन्दमथ सङ्घजनोऽसौ, सञ्चचाल गिरिराजतटेषु[1] ॥ २

मञ्जुलः कनककुण्डलकान्तैः, स्त्रीमुखैः सरवि-सोमशताभैः ।
एकभानु-हिमभानुमनोज्ञं, मेरुमप्यजयदेष गिरीन्द्रः ॥ ३

अञ्चलैः शशिमुखीवसनानां, चञ्चलैः कटकसीमनि शैलः ।
सङ्घसङ्ग-सुकृतामृतसेका-दुद्भवत्प्रथमपक्ष इवाभात् ॥ ४

आन्तरेण नयनेन जिनेन्दो-राननेन्दुरुचिपानपराणाम् ।
अप्युदारगिरिशृङ्गविलासे, न श्रमः समजनिष्ट जनानाम् ॥ ५

नाम नामसुधया जिनभर्तुः, प्राप्तया जनमुखेषु न तृष्णा ।
दूरवर्त्तिनि मुखामृतकुण्डे, लोचनानि तृषितानि जनानाम् ॥ ६

प्राग्प्रियोजितमनोहृततीर्था-धीशपादकमलाङ्कितमौलिः ।
शैलसानुषु जनो न तदानीं, तापमाप तपनांशुततिभ्यः ॥ ७

क्ष्मागतेन लघुकं यददर्शि, क्षोणिभृच्छिरसि तेन जनेन ।
उच्चकैर्विचरता ददृशे तत्, सङ्घसङ्गममदादिव पुष्टम् ॥ ८

देवभक्तिभरनिर्मितहस्ता-लम्बनव्यतिकरेण जनोऽयम् ।
आसदद् गिरिशिरांस्यतिहर्षा-न्मङ्क्षु सम्मुखमिवागतवन्ति ॥ ९

अद्भुतप्रमदशालिषु शैलः, शेखरस्थितिषु तेषु जनेषु ।
भूतिभर्स्सितसुरेषु स रेजे, मेरुवन्नवरविच्छविपिङ्गः ॥ १०

कर्मवैरिविजयाय सतेजा, **नाभिभू**पदनखांशुविचित्रम् ।
आरुरोह सचिवः शुचिदन्तं, दन्तिराजमिव तं गिरिराजम् ॥ ११

वीक्ष्य यक्षमिह सङ्घजनौघः, श्री**कपर्दिन**मथाब्धिरिवेन्दुम् ।
क्षुभ्यति स्म चतुरः स चतुर्धा, विस्तृतस्तरलहर्षतरङ्गः ॥ १२

अन्तरायदलनाय जनौघं, तीर्थसेवनकृतेऽभिपतन्तम् ।
द्रष्टुकाम इव वर्त्मनि दूरा-दारुरोह गुरुशैलशिलां यः ॥ १३

भावनासलिलशालिनि शश्वत्, तीर्थनाथपदपद्ममनोज्ञे ।
मानसे तनुमतां विलसन् यो, हंसवत् सृजति कामपि कान्तिम् ॥ १४

यक्षमुख्य ! स भवान् भुवनैक-त्राणकारणमकारणबन्धुः ।
वत्सलेव जननी जनमेनं, नाथ ! पालयतु बालमिव स्वम् ॥ १५

---

[1] क-ख-°तटांषु ॥

श्रीकपर्दिनमिति स्तुतिपूर्वं, यक्षराजमभिपूज्य सहर्षम् ।
आशु सङ्घपतिरेष ससङ्घस्तीर्थनाथनमनार्थमचालीत् ॥ १६

उत्सुकैरथ जनैर्जिनचैत्यं, वीक्ष्य मङ्क्षु पथि गामिव वत्सैः ।
व्यक्तशक्तिरभसत्रुटितोच्चैः-कर्मबन्धतरलं प्रदधावे ॥ १७

सञ्चरन् भुवि न माति जनो यः, स्फूर्तिसङ्कुचितमूर्तिलतोऽसौ ।
द्रष्टुमास्यनलिनं जिनभर्तु-श्चैत्यधाम्नि स ममौ सममेषः ॥ १८

दल्यमानमसमानविमर्दे, हृद् हृदा ननु मिथस्तनुभाजाम् ।
आत्मभङ्गभयभङ्गुरसत्त्वै-रन्तरारिभिरमोचि तदानीम् ॥ १९

पापपङ्कशमनाय जनानां, स्नानमन्तरकरोद् ध्रुवमात्मा ।
रोमवर्त्मसु जलेन विमर्दे, स्वेदपूरमिषतः प्रसृतं तत् ॥ २०

आबभौ घनघनाघनलक्ष्मी-रङ्गिनां प्रमदरोमविकारः ।
अन्तरस्थितजिनेन्दुरुचिश्री-निस्सरद्दुरिततामसतुल्यः ॥ २१

लोचनैस्तनुमतामिति खिन्नैः, प्राप्य जैनवदनामृतकुण्डम् ।
आशु क्लृप्तसवनैरिव रेजे, सम्मदेन विगलज्जललेशैः ॥ २२

तत्र तादृशि जनस्य विमर्दे, शक्यते भ्रमयितुं न करोऽपि ।
वीक्ष्य विश्वविभुमेनमनृत्यन्, भाविनो यदि मुदा मनसैव ॥ २३

स्वीयतादृशविमर्दसुदूर-क्षिप्तसूरकिरणः किल लोकः ।
रत्नभूषणविभिन्नतमिस्रो, भक्तिकृत्यमकृत प्रभुचैत्ये ॥ २४

धूलिधूम्रपद एव तदानी-मागतो जिनपतिं प्रणिपत्य ।
दूरपूरितमनोरथवेगः, स्तोतुमारभत मन्त्रिवरोऽसौ ॥ २५

त्वद्गुणान् गदितुमीश ! समग्रान्, न स्वयं सुरवरोऽपि समर्थः ।
गोचरोऽप्यसि न मादृशवाचां, मौनमेव हि तव स्तवहेतुः ॥ २६

त्वां निरर्थकगिराऽपि तथाऽपि, स्तौमि विश्वनुत ! मुग्धतयाऽहम् ।
प्रीतये निजशिशोः स्फुटलाला-म्भांसि लल्लवचांसि गुरूणाम् ॥ २७

न क्षमोऽयमहितानपि हन्तुं, स्वं कुटुम्बकमयं च मुमोच ।
जल्पिता जिन ! परैरिति दोषाः, प्रत्युत स्तवनतां तव जग्मुः ॥ २८

भाषितं भुवनभूषण ! भित्त्वा, कर्म निर्ममपते ! भवतेदम् ।
श्रूयते त्वदभिधाऽपि कदाचिद्, यत्र तत्र न करोति निवासम् ॥ २९

नाऽऽप्नुवन्ति भवबन्धनिकेता-दग्रतस्तव गतस्य पदं ये ।
भ्राम्यते भ्रमवशाज्जिन ! मुक्त्यै, तैर्वृथैव पृथिवीवलयान्तः ॥ ३०

त्वं मनोभवमपास्य पुनस्त-ज्जन्मभीरुरमुचः स्वमनोऽपि ।
किं हरन्तु हरिणीतरलाक्ष्य-स्तावकं तदमनस्ककिरीट ! ॥ ३१

प्राप्य रत्नमिव पुण्यपयोधे-स्त्वां हृदि प्रणिदधाति जनो यः ।
स प्रयाति पुरुषोत्तमभावं, पश्य न स्वपिति किन्तु भवाब्धौ ॥ ३२

यामवाप्य न नमामि भवन्तं, तां न निर्वृतिमपि स्पृहयामि ।
त्वत्प्रसादवशतस्त्वयि भक्ति-र्भातु मे जिन ! भवेऽपि भवेऽपि ॥ ३३

निर्मितस्तुतिरिति प्रतियातः, कृत्स्नमेष सुकृती कृतशौचः ।
स्नानहेतुकलशान् घुसृणाम्भः-पूरितानयमचीचलदिन्द्रैः ॥ ३४

श्रावकाः प्रतिपदं हृदयाग्र-न्यस्तहस्तधृतकाञ्चनकुम्भाः ।
निस्तरीतुमिव संसृतिसिन्धुं, कुर्वते स्म निरपायमुपायम् ॥ ३५

शुद्धसङ्घपतिकीर्तिलतानां, विष्टपत्रितयगर्भगतानाम् ।
आतपत्रपटली विमलश्री-रादिकन्दवदियं विरराज ॥ ३६

अत्युदारतरनर्त्तनगीतै-रुत्सवेन महता प्रहताघः ।
प्राप मन्त्रितिलकः किल कर्म-ध्वंसिनो जिनपतेरथ चैत्यम् ॥ ३७

कुङ्कुमाम्बुभिरसिस्नपदीशं, श्रावकैः सह यथाविधि मन्त्री ।
तैर्विधौततनुरेष तदाऽभूत्, पर्वतो **विमल** इत्युचिताह्वः ॥ ३८

अङ्गमण्डनमखण्डनमासी-न्निर्मितं मृगमदैर्जिनभर्तुः ।
क्लृप्तसन्नहनसन्निभमुच्चैः, कर्मकूटरिपुकोटिजयाय ॥ ३९

भूरिपुष्परचिता जिनभर्तु-र्लम्बिताः कृतिभिरर्चनमालाः ।
अप्रभूष्णव इव स्मरमुक्ता, भल्लयो वपुषि भूषणमासन् ॥ ४०

तैस्तथा जिनपुरस्तिमिरोर्मि-र्निर्ममेऽथ पृथुधूपजधूमैः ।
सस्पृहेव सचिवं सुकृतश्रीः, कौतुकादभिससार यथाऽसौ ॥ ४१

आरात्रिकं कृतमथ **प्रथमस्य तीर्थ-भर्तुः** पुरः स्फुरदुरुद्युतिचक्रवालम् ।
उच्चावचप्रसरणैर्निजघान सङ्घ-दोषद्विषः कुसुमवृष्टिविराजमानम् ॥ ४२

इत्थं प्रेक्षणकक्षणाहितमनाः सम्पूज्य विश्वत्रयी-
पूज्यं **नाभिसुतं** समाप्य च तथारूपामिहाष्टाहिकाम् ।
मन्त्रीशः प्रतिलाभितव्रतिततिः **शत्रुञ्जयो**र्वीधरा-
दुत्तीर्णः कृतमङ्गलः समजनि श्री**नेमि**सेवोत्सुकः ॥ ४३

किञ्च—

शौर्यैर्वज्रधरस्य दैत्य-मरुतामाचार्ययोः प्रज्ञया,
दानैर्देवगवी-मणि-क्षितिरुहां स्वर्गश्चिरं गर्वितः ।

एकेनैव विभूषणेन भवता श्रीवस्तुपाल ! क्षिति-
स्तं निर्जित्य मुदा तवाऽऽशिषमदादेवं मैदायुर्भव ॥ १

कल्पान्तोद्भ्रान्तभास्वत्करनिकरनिभो विश्वमन्तः समन्तात्,
सन्तापस्त्वत्प्रतापज्वलदनलभवः केन शक्येत सोढुम् ? ।
मन्त्रिन् श्रीवस्तुपाल ! त्रिजगति यदि ते कीर्त्तिलेखेव न स्या-
दन्तःपीयूषपेया बहिरपि च मुहुश्चन्दनोद्वर्त्तनानि ॥ २

भासि दौस्थ्यतरुखण्डखण्डनै-र्वस्तुपाल ! भुवि दानिकुञ्जरः ।
चित्रमत्र किमु शङ्खमर्दनं, यत् त्वया क्रमणलीलया कृतम् ॥ ३

काव्यमेतदरिसिंहनिर्मितं, सर्वतोमुखतयैव रङ्गभूः ।
वस्तुपालसचिवेन्द्रकीर्त्तिभि-र्नर्त्तकीभिरिव यत्र नृत्यते ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

॥ इति सुकृतसङ्कीर्त्तननाम्नि महाकाव्ये शत्रुञ्जयदर्शनो नाम सप्तमः सर्गः ॥ ७ ॥



सचिवः समं सपदि सङ्घजनै-रथ देवपत्तनमगान्नगरम् ।
प्रणनाम कामजयिनं नयन-प्रियमिन्दुलाञ्छनमिहोग्रमहाः ॥ १

विधुमौलिमौलिविधुधामभरै-रिह मे भविष्यति सदाऽभ्युदयः ।
इति पाथसाममुमुत्र पतिं, कृतवासमैक्षत स मन्त्रिपतिः ॥ २

इह सोमनाथमुकुटोल्लसितैः, सरिदम्बुभिर्विधुविभाभिरपि ।
सततप्रवृद्धविहरल्लहरी-निवहध्वनिध्वनितदिग्वलयम् ॥ ३

सततान्तरालशयविष्णुवपु-र्विभवर्द्धिभाभिरिव मेचकितम् ।
उदयत्तदीयशयनीयफणि-स्फुटरश्मिराशिनिभफेनधरम् ॥ ४

सलिलेन विश्ववलयप्रलयः, समये मयैव रचनीय इति ।
मुहुरीरितापहृतवीचिभरै-र्जनयन्तमन्वहमिहाभ्यसनम् ॥ ५

पुरुषोत्तमो हृदि मदीयसुतं, शिरसीश्वरोऽपि विदधाति सदा ।
प्रमदादुदारतरगर्जमिव, प्रकटं नटन्तमिव वीचिकरैः ॥ ६

अयि वज्रभाजि कुपिते द्युपतौ, कृतरक्षणं क्षितिभृतामभितः ।
स्फुरितोर्मिबाहुमिति कीर्तिततीर्जगति क्षिपन्तमिव फेनमिषात् ॥ ७

१ ग-महायुर्भव ॥

अकृशैः कृशैश्च नवशुक्तिफल-प्रकरैर्विभान्तमभितः शुचिभिः ।
शिशुभिर्निजैः शशिभिरङ्कधृतै-रिव भाविभूरितरकल्पकृते ॥ ८

द्युमणिः क्षपामणिरपि प्रभया, मयि मुच्यते जयति कोऽयमिह ।
इति विस्मयादपरवारिधिना, सचिवोऽप्यनन्यसदृशो ददृशे ॥ ९

अथ कम्बुचिह्नशुचिरम्बुनिधिः, स्फुरितेन्द्रनीलमणिनीलरुचिः ।
रभसादसस्मरदमात्यपते-र्नमनाय **नेमिजिन**मात्मगुणैः ॥ १०

अथ सञ्चलन्नचल**रैवतकं**, पुरतः स्फुरत्पवनलोलतम् ।
सचिवो ददर्श शुचिसङ्गसमा-गमनप्रवृत्तमदनृत्यमिव ॥ ११

वनवल्लयो गुरुतयाऽस्य गिरेः, शिखरान्तराललितोडुगणाः ।
विबभुर्भृशं सविध**नेमि**विधु-प्रभवप्रभावसततप्रसवाः ॥ १२

गिरिरेष सिन्धुतनिकानिकरै-र्वितनोति धर्मनृपतिस्थुलताम् ।
कलशश्रियं शिरसि यस्य दधौ, गगनापगाध्वजिनि **नेमिजिनः** ॥ १३

न तथा व्यराजदुडुशुक्तिफलै-स्तरणीन्दुकुण्डलयुगेन न च ।
शुशुभे **समुद्रविजया**ङ्गभव-प्रमुमौलिनीलमणिनैव यथा ॥ १४

अवलोक्य धूपमयधूमततिं, जिनधाममूर्धनि पयोदधिया ।
इह चातकैः स्मितमुखैर्मुमुदे, वियदापगालहरिसीकरतः ॥ १५

कटकस्थकाननकलापिकुलं, घनकाल एव मुदमुद्वहते ।
इह **नेमिमन्दिर**मृदङ्गरवै-रनिशं शिरोवनविलासि पुनः ॥ १६

इति वर्णयन्नयमनूननयः, सचिवः शिवश्रिय इवाऽऽश्रयभूः ।
कृतसन्निवासरचनः सुचिरं, गिरिदर्शनोत्सवविधिं व्यधित ॥ १७

कृतकृत्य एव समये शयितः, क्षणदाक्षयक्षणविबोधशुचिः ।
प्रणिपत्य **नेमि**नमयं मनसा, सचिवो मनोरथमिति व्यदधात् ॥ १८

जनये जिन ! स्मितमनाः स्नपनं, भवदीयदर्शनसुधाजलधौ ।
भवदावपावकभुवोऽभिभवन्, विपदः कदाऽहमपदाहवपुः ? ॥ १९

भुवनाधिपातिभवदाहभिदे, भवदङ्घ्रियुग्ममहमात्तमहः ।
निदधामि मूर्ध्नि नलिनाभमथ, प्रलयैकदारुण ! कदाऽरुणितम् ? ॥ २०

भवकाननान्तरविहारभवां, भवदाननेन्दुरुचिपानरुचिः ।
विषमां तृषं परिहरामि चिरा-चपलश्चकोर इव देव कदा ? ॥ २१

विकटं नयामि शिखिवच्छिरसि, स्वकरौ कलापिकलया कलयन् ।
अवलोक्य वारिदमिवाशु कदा, शुकदारदीप्तिभवदीयवपुः ? ॥ २२

नयनाग्रवर्त्मनि परिस्फुरतीं, दुरितान्धकारपटलीं विकटाम् ।
दलयन्ति मे त्रिजगदीश ! कदा भवदीयपादनखदीपशिखाः ? ॥ २३

भुवनैकनाथ ! भवदीयवपु-र्विपुलप्रभापयसि मग्नमपि ।
द्वितयं कदा नयनयोरिह मां, हिमहारतारगुण ! तारयति ॥ २४

तदपीयत श्रुतिपुटेन यशः, सततं विषण्णदिविषन्नदि ते ।
भवदङ्गदीप्तिममुना यमुना-जयिनीं धयामि नयनेन कदा ? ॥ २५

नलिनादिपुष्पनिवहेन सुरै-र्यदपूजि पादयुगमीश ! तव ।
जिन ! तेन पङ्कजनिभेन कदा, जनयामि पूजितमिवाऽऽत्मशिरः ॥ २६

इति गद्गदाश्रुपुलकाकुलितः, कलयन् मनोरथमनन्यमनाः ।
सचिवः **शिवातनय**मात्तनयः, क्षणमेकमैक्षत पुरोगमिव ॥ २७

अथ कल्पिताखिलविभातविधि-र्गिरिमारुरोह सह सद्धजनैः ।
सचिवो जिनक्रमनखेषु पुरो-गमितेन कृष्ट इव मङ्क्षु हृदा ॥ २८

तदनु प्रमोदरभसेन रजः-प्लुतपाद एव विननाम जिनम् ।
अपि चैष नेत्रगमिताक्षगण-प्रसरक्षणं निभृतमीक्षितवान् ॥ २९

रचिताङ्गशौचविधिरिन्द्रगणैः, सहितो जिनस्नपनहेतुरथ ।
जिनभक्तिरागमिव मूर्त्तमसौ, कलशेषु कुङ्कुमजलं न्यदधात् ॥ ३०

अथ केऽपि भक्तिभरभासुरिताः, स्फुरिता जिनस्य पुरतः परितः ।
स्वयमुत्सवं विदधिरे मधुर-ध्वनिगीतिरीतिमयवाद्यलयम् ॥ ३१

वदनाग्रभागगतपाणियुग-स्थितभेरिदण्डमिषदन्तकरः ।
शुशुभे करीन्द्र इव मन्द्ररवः, किल कोऽपि पापतरुपातपटुः ॥ ३२

अपरः पयोदरववादभव-न्निनदं मृदङ्गमपि वादितवान् ।
ननृते दरद्दुरितभोगिशतैः, कृतिनां मनोमयमयूरकुलैः ॥ ३३

अपरस्य वंशमपि वादयतो, मधुरस्वरैः प्रमदिनां कृतिनाम् ।
यदमीलि पक्ष्मपुटकेन रसात्, तदवेशि कर्ण इव नेत्रमृगैः ॥ ३४

अपरः पिबन्नपि **शिवातनुभू**-वदनेन्दुदीधितिसुधां स्थिरदृक् ।
भृशमुज्जगार जनयन् जनता-हृदि सम्मदं ललितगीतमिषात् ॥ ३५

चटुला नटी सरसनृत्तवशा-दिह रत्नभूषणशुभा शुशुभे ।
कुलदेवतेव तडितां तरला, जलदद्युतेर्जिनपतेः पुरतः ॥ ३६

इति सम्मदेन जिनमस्नपयद्, घुसृणाम्बुभिः क्षितिपतिः स तथा ।
कपिशो यथाऽयमपि **रैवतकः** किल देवताद्रिसदृशो ददृशे ॥ ३७

स्वह्नदः प्रमोदविशदस्य रसात्, परमाणुभिः पुर इव प्रसृतैः ।
सचिवेन सारघनसाररसै-र्नवमङ्गमण्डनमकारि विभोः ॥ ३८

कुसुमायुधस्य कुसुमानि मना-गपि सम्मुखानि नहि यत्र ययुः ।
इह तानि तीर्थकृति सङ्घटयन्, स बभौ कृती मदनतोऽप्यधिकः ॥ ३९

यमुनौघसङ्गमधिया सचिव-प्रथितेऽथ धूपमयधूमभरे ।
प्रमदेन तत्क्षणमकारि नभः-सरिदम्बुनि द्युमुनिभिः सवनम् ॥ ४०

अथ तामसं कवलितं चलिता-ञ्जनकैतवेन भृशमुद्गिरता ।
नवदीपिकापरिकरेण चिरं, निरराज यजिनमयं सचिवः ॥ ४१

स्फुटमष्टकर्ममथनोऽयमिति, प्रथयन्निहाष्टदिवसानि महम् ।
स्वयमष्टमूर्तिमुकुटेन्दुसमं, सचिवोऽष्टसु न्यधित दिक्षु यशः ॥ ४२

सचिवस्य दास इव शब्दजितो, जलवाह एष गिरिमूर्ध्नि वहन् ।
न ववर्ष सङ्घजनतार्त्तिभयात्, त्रुटितान्यपूरि सलिलानि पुनः ॥ ४३

देयाः स्वामिन्! पुनर्मे सुकृतपुरपुरोढौकनानीति जल्प-
न्नानन्दस्पन्दसारैरिव घटितमना **नेमिनाथं** प्रणम्य ।
नामं नामं निकामं विधिवदविधुरं मन्त्रिमान्योऽय**मम्बा-**
**शाम्ब-प्रद्युम्न**मुख्यानपि पुलकिवपुः पर्वतादुत्ततार ॥ ४४

किञ्च—

स्वस्ति श्रीदेवलोकादमरपरिवृढः क्ष्मातले श्रीविशालं,
मन्त्रीशं **वस्तुपालं** कुशलयति यथा जीव! कल्पान्तकोटीः ।
लीनास्त्वत्कीर्तिगाने यदसुरविसरा न स्मरन्त्येव वैरं,
स्वैरं वाऽमी स्मरन्तु त्वदरिभिरभवन् दुर्जया मे ध्वजिन्यः ॥ १

चञ्चत्काञ्चनकूटकोटिघटितक्रीडाचलैर्याचक-
स्तोमैः प्रस्तुत**वस्तुपाल**सचिवप्राप्तार्थसार्थस्मितैः ।
अस्त्येषां किमु नाम धामनि क्रियद् दास्यन्त्यमी याचिताः?,
मत्वैवं न ययाचिरे बत! परे कल्पद्रुकल्पा जनाः ॥ २

उच्चरणचारचारुस्तव खड्गः किमपि सुरभसारम्भः ।
श्री**वस्तुपाल**! जगति, व्यजयत **सङ्ग्रामसिंह**ममुम् ॥ ३

**लावण्यसिंह**तनयाननसोमरश्मि-स्तोमं खलास्यकमलालिकलापहारी ।
श्री**वस्तुपाल**सचिवाधिपकीर्तिदुग्ध-सिन्धुं तरङ्गयति नित्यमयं प्रबन्धः ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्न**रिसिंह**विनिर्मिते । इमान्यंकृत चत्वारि, काव्यान्य**मरपण्डितः** ॥ ५

**॥ इति सुकृतसंकीर्त्तननाम्नि महाकाव्ये श्रीनेमिदर्शनो नामाष्टमः सर्गः ॥ ८ ॥**



अथ गिरीशतटीषु मनीषिणां, परिवृढः परिपूर्णमनोरथः ।
षडपि तत्र ददर्श ऋतून् कला-शुचिरयं चिरयन्त्रितविभ्रमान् ॥ १

प्रकटितायसकर्त्तरिका मधौ, मधुसखस्य भटा इव किंशुकाः ।
भ्रमरसङ्गसितेतरविस्फुरत्-सुमनसो मनसो ददते मुदम् ॥ २

इदमभूद् दलयन् नलिनीः प्रियाः, मम महःपरिखण्डनहेतवे ।
इति हिमस्य भिदामहिमद्युतिः, स्म तनुते तनुतेजितविष्टपः ॥ ३

स्मरशिखी तनुमानिव चम्पकः, कुसुमितो मधुपावलिधूमितः ।
दहति काननसीमनि काञ्चन-च्छविरहो ! विरहोषितयोषितः ॥ ४

स्मितसरोजमुखीमुखवासना-सुरभिमद्यविशेषितसौरभम् ।
परिहृतापरवल्लिमधुव्रती-धवकुलं बकुलं प्रति धावति ॥ ५

सुमनसां त्वमसि स्थितिभूस्त्वया, जयति विश्वमसौ कुसुमायुधः ।
मधुमितीह रसालरसालसा, पिकवयः कवयः कवयन्त्यमी ॥ ६

स्मरनृपस्य चरत्वमुपागता, द्विजचया मधुरध्वनिशालिनः !
मधुलिहः सुमनस्सु ददुः पदं, तिलकजालकजातविभूतयः ॥ ७

दधुरनङ्गनिषङ्गतुलामधो-मुखशिलीमुखराजिविराजिताः ।
स्फुटविकाशमुखाः कमलाकराः, न पथि कं पथिकं प्रति प्रीतये ॥ ८

स्तुतगुणं कुतुकेन मधुव्रतै-रिव रवाकुलितैः सुमनोमयम् ।
मधुसखाय मधोर्विनियोगतः, शरचयं रचयन्तितमां लताः ॥ ९

व्यथयति प्रथितारुणतेजसो, दहनमन्त्रमयादिव शश्वतः ।
मधुसखोऽयमशोकलतालसत्-कुसुमतोऽसुमतो विरहातुरान् ॥ १०

मलयजद्रुमसङ्गिभुजङ्गम-स्फुरितफूत्कृतिसम्भ्रमसम्भृतः ।
पथिकलोलदृशां[1] मलयानिलः, सुविषमो विषमोहमिव व्यधात् ॥ ११

कमलकोमलकोशकुचोन्नते-रलिकलालिकलासितसम्पदः ।
व्रततिकाततिकायवनश्रियो-ऽधिकमशोकमशोभत पाणिवत् ॥ १२

कमलकान्तिहरीं कृशतां नयन्, सह हिमाद्रिहिमेन विभावरीम् ।
कमलबन्धुकृतोन्नमनो बभौ, शुचिरयं चिरयन् दिवसश्रियम् ॥ १३

द्रुतसमेतदिनाधिपतिप्रभा-परिगलद्रतशेषतमीकणाः ।
अनिललोलशिरीषरजच्छलाद्, द्विरदनीलरुचो बभुः ॥ १४

अहमिहारुणधाम्नि सितेतरो, बत ! विभाम्यथवाऽत्र सितच्छवौ ।
भ्रमति भृङ्गयुवा नवपाटले, विचकिले च किलेति मुहुर्मुहुः ॥ १५

---

१ ग–पथिकलोकदृ°

तरलतारलतागृहपङ्कज-च्छदनचन्दनचन्द्रमरीचिभिः ।
तपनतापनताकृतिरप्यसौ, रतिवरोऽतिवरोरुषु जृम्भते ॥ १६

नभसि दर्पणतुल्यतडिल्लता, जलदपद्धतिरुद्धतडम्बरा ।
मदनसैन्यगजव्रजवद् बभौ, कृतरवा तरवारिसितेतरा ॥ १७

वियदमीमिलदर्क-निशाकर-द्वयमये नयने भयतो भृशम् ।
यदतुलां तडितं घनमालिका-धिकरवा करवालमिवाक्षिपत् ॥ १८

यदयमेतदवाप्य तपस्विनां, हृदि हतोऽपि जिजीव मनोभवः ।
अपि भुजङ्गभुजां शुशुभे सुधा-कवचनं वचनं शिखिनां ततः ॥ १९

मदभिवर्धितसिन्धुमहीरुह-व्रजविशोषकमेतदिति क्रुधा ।
अधिककर्ममहः सहसा घनैः, कवलितं वलितं तडितां मिषात् ॥ २०

अपरता परतापककण्टिका-हतककेतककेलिषु षट्पदी ।
अमलकोमलकोरकसौरभ-स्थितिषु जातिषु जातरसाऽभवत् ॥ २१

अलकलोलमधुव्रतमञ्जुलाऽ-म्बुजमुखी जघनोज्ज्वलसैकता ।
शरदि हंसरवेण समाश्रिता, धृतरसा तरसा तटिनीवधूः ॥ २२

क्वचन भर्तरि याति तपात्यये, घनघटाश्रुजलानि मुमोच न ।
विरहवद् दधती तपनं व्यथा-प्रदममन्दममङ्गलशङ्कया ॥ युग्मम् ॥ २३

पदमधत्त गतस्य पयोमुचः, सुहृदशून्यमसौ शिखिनां गणः ।
गलितपत्रमयातपवारणैरविभवं विभवं महसां क्षिपन् ॥ २४

समुदिते मुदितेऽम्बुरुहि प्रिये कुलवये वलये सरितां तथा ।
अभृत सम्भृतसम्पदमर्यमा-च्छविमलं विमलं च विधुर्महः ॥ २५

खररुचेर्विजयाय निजद्विषः, सहसि साहसिकीव विभावरी ।
प्रतिदिनं परितः परिवर्धितो-त्तमहिमा महिमानमुपाययौ ॥ २६

तुहिनमन्दतरां मलिनेऽब्जिनी-मलिनि मुञ्चति रागपरामपि ।
करणिकाभिरहो ! शतपत्रिकाः, सह सितं हसितं परितन्वते ॥ २७

पदमकारि मुखे सुदृशां सदा, विमलकान्तिनि कुङ्कुममण्डिते ।
हिमरुचः कमलस्य च सम्पदा, हिमनिकामनिकारविनुन्नया ॥ २८

तुहिनवाहिनवाद्भुतवातभी-रुचितकुञ्चितकुङ्कुमकैतवात् ।
वरतनूरतनूष्मणि भास्वरा-लपततिः पतति स्तनमण्डले ॥ २९

हिमभरस्य तपःप्रथितोन्नते-र्वनमहीरुह एव भुजो भृशम् ।
निजरिपोरपि निर्गमनोद्यमं, दिनकरो न करोति कथञ्चन ॥ ३०

---

१ क-ख अभि भुं ॥ २ एतत्पद्यं क-ख पुस्तकयोर्नास्ति ॥

पुलककम्पितसूक्तिभिः परि-ष्वजनकर्म दिशन् हरिणीदृशाम् ।
हिममयः पवनो ननु कामिना-ममितकामितकारणतां ययौ ॥ ३१

पथिककाननलग्नमनोभव-ज्वलनसम्भवधूमभरोपमम् ।
नवलवङ्गरजः पवनाहतं, जगति रङ्गति रङ्गितषट्पदम् ॥ ३२

दिनमयं नमयन् सहसा कृत-स्मरजनी रजनीः परिवर्धयन् ।
विरहितारहितासु सुखोर्मिका-रसमयः समयः शिशिरो भृशम् ॥ ३३

सततकुसुमितानृतूनशेषा-निति समकालमिहावलोक्य मन्त्री ।
अधुनुत विदितप्रभुप्रभावा-तिशयविचारचमत्कृतः किरीटम् ॥ ३४

शैलेऽस्मिन् पुरुहूतपौरमिथुनैर्मन्त्रीशनिर्मापित-
श्रीमन्नेमिजिनेश्वरोत्सवभवत्कौतूहलाकारितैः ।
रन्तुं नित्यषडर्तुभूतिविभवद्वल्लीभवल्लीलया,
सानन्दैरतिमन्दनन्दनवनीमुक्तस्पृहैः सस्पृहे ॥ ३५

कुसुमावचायमनसां श्रवणे, सुरयोषितामथ सरोजजुषि ।
कुसुमादुपेत्य निभृतध्वनयो, दधतीव भेदमलिनो मलिनाः ॥ ३६

वयमेव शस्त्रपदवीं गमिता, मदनेन सम्प्रति किमेभिरिति ।
अवचिन्वते स्म कुसुमानि तदा, रमणैः समं सुरकुरङ्गदृशः ॥ ३७

नववृक्षमूर्ध्नि यदकारि तप-स्तपनातपेन धृतरागभरैः ।
तरुणीकरग्रहणपुण्यफलं, नवपल्लवैरिदमलाभि ततः ॥ ३८

नवपल्लवा निजविभूतिहृतो, वनवर्तिनः स्फुटमशोकजुषः ।
परिकम्पिनो हठवशादरुणै-स्तरुणीकरैर्बिभिदिरे रभसात् ॥ ३९

कुसुमार्पणेषु रमणः सुदृशा, प्रथितेऽन्यनाम्नि लघुतां गमितः ।
हृदयात् तदात्वतरलेन सह, श्वसितेन तूलवदकर्षि बहिः ॥ ४०

ददता प्रसूनमपराभिधया, दयितेन वज्रनिभयाऽभिहते ।
हृदि मानिनी ननु विधाय दृशं, सजलामवागतनुत श्वसितम् ॥ ४१

उदितं प्रियेण निभृतं चतुरा, परगोत्रमश्रुतवती च रहः ।
तदुरस्थपुष्परजसि श्वसितं, व्यधिताश्रु च तदुड्डयने ॥ ४२

सृजता स्रजं शिरसि पद्मदृशो, मृदु चुम्बता प्रियतमेन परा ।
अपि शेमुषीश्लथतया न रसाद्, ददृशे परा न तयाऽपि रुषा ॥ ४३

सकलस्वकीयकुसुमस्वहृति-प्रतिपन्थिनीः प्रति भृशं सुदृशः ।
अमुचन् शीलिमुखशतानि लताः, समभूषयन्नहह ! तान्यपि ताः ॥ ४४

अथ काननान्तरविहारभव-नवखेदभेदरभसेन ययुः ।
दयितैः समं मृगदृशोऽम्बुनिधि-प्रतिहस्तकं सवनहेतु सरः ॥ ४५

तरुणीसमागमवशेन जवात्, किल पल्वलोऽजनि मुदा द्विगुणः ।
विलसत्तरङ्गकरकोटिरयं, तिरयन् निजाः कमलिनीदयिताः ॥ ४६

अतिदूरतः सरभसं रसभाक्, समुपेत्य लोलविषयव्यसनः ।
कुचयोर्विलुठ्य सुदृशां विलयं, प्रययौ तरङ्गनिकरः सपदि ॥ ४७

दयितेषु तोयजवनेषु गते, रभसेन यत्र कलहंसकुले ।
सरसी रराज सुदृशां वदनैः, कुचमण्डलैरपि च फेनभरैः ॥ ४८

हरिणीदृशां कलितरागभरं, कुचसङ्गमेन परिवृद्धरसम् ।
ब्रुडदम्बुजन्मकपटेन सरः, परिमीलयत्यतिसुखीव दृशः ॥ ४९

अवलोक्य कोऽपि रभसेन जनं, विपरीतलोचनमुदाररसः ।
हरिणीदृशा श्रुतिसरोजकृता-ननचुम्बनव्यतिकरो हसितः ॥ ५०

अभिसेचनेन नयनप्रसृति-प्रसरत्कटाक्षरसतोऽनुपति ।
अपरा सखीं प्रति करप्रसृति-च्युतनीरशून्यजलकेलिरभूत् ॥ ५१

द्रुतमुद्धृतेऽम्बुजमिति प्रकटे, ब्रुडितस्य वारिणि करे कमितुः ।
विदितस्य वीक्ष्य मुखमस्य नवा, रमणी न किं किमकृत त्रपया ? ॥ ५२

ईदृक्केलिरसप्रसन्नमनसः स्वर्गौकसो भास्करे,
यातेऽप्यम्बुनिधिं सरःकुमुदिनीबोधप्रबुद्धक्षपाः ।
श्रीमन्त्रीश्वरवस्तुपालयशसा शुभ्रे सदैवाम्बर-
क्रोडे वैभवपिष्टविष्टपतमःस्तोमेन जग्मुर्दिवम् ॥ ५३

किञ्च—

आस्ते यावदखर्वपर्वतघटा गुर्वीयमुर्वी भृशं,
तावन्नन्दतु वस्तुपाल ! जगतीपुण्यैरगण्यैर्भवान् ।
येनैतां भुजगाधिपस्तव भुजे विन्यस्य नागाङ्गना-
गोष्ठीगीतभवद्यशःश्रुतिरसैराचान्तचित्तोऽभवत् ॥ १

आजन्मापि कृशाकृतिं द्विजपतिं स्वे मूर्धनि स्वर्धुनी-
धौते धारयते जगत्पतिरसावग्र्यो गुणग्राहिणाम् ।
सद्यः सङ्गतमप्यमुं वसुभरैः पुणाति पूषा शिरो-
भूषा दानवतामुभावपि शुभावेतौ वसन्ते गुणौ ॥ २

**श्रीवस्तुपाल** ! रणभाजि भवत्कृपाणे, धाराधरेऽपि परवारणविभ्रमेऽस्मिन् ।
उत्पत्य कोपतरलं सहसा जगाम, **खड्गग्रामसिंह** इति स स्वयमेव भङ्गम् ॥ ३

**वस्तुपाल**सुकृतामृतप्रपा, काव्यमूर्तिर**रिसिंह**सूत्रिता ।
कण्ठदघ्नरसपायिनः शिरः, कम्पयन्ति किल यत्र कोविदाः ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्न**रिसिंह**विनिर्मिते । इमान्यकृत चत्वारि, काव्यान्य**मरपण्डितः** ॥ ५

**॥ इति सुकृतसङ्कीर्त्तननाम्नि महाकाव्ये षड्ऋतुवर्णनो नाम नवमः सर्गः ॥ ९ ॥**



तदनु वदनकान्तित्यक्तेन्दुः कृतीन्दुः, समुदितमदपात्रं पूर्णयात्राभिलाषः ।
इह विहितनिवासः काशसङ्काशकीर्तिः, कृशितविततकर्मा निर्ममे सङ्घभोज्यम् ॥ १

मलयजमयमम्भः पादयोरुत्तमाङ्गे, घनमथ घनसारं चीवरं चारु चाङ्गे ।
यश इव निजमीदृग्रूपमारोप्य तेन, स्मयरसमुपनीताः साधवोऽगाधबोधाः ॥ २

सन्नं यन्न तदापि रत्नकनकस्तोमैरतुच्छाशये,
तस्मिन् यच्छति वाञ्छताधिकतरं दीनेषु दूरादपि ।
मन्येऽपूरि ततो गभीरिमजितो रत्नानि रत्नाकर-
स्तस्य स्थैर्यनिराकृतश्च करदो हेमानि हेमाचलः ॥ ३

किं सूते कर एव हेमनिकरं श्री**नेमि**भक्तिक्रिया-
तुष्टै **रैवतका**धिदैवतकुलैः किं वा निधिः पूर्यते ? ।
इत्थं याचकसञ्चयस्य किमपि स्वस्यापि वाञ्छाधिकं,
तस्मिन् यच्छति खेचरेष्वपि चमत्कारश्चकार स्थितिम् ॥ ४

तदानीं दीनौघे मुहुरपि गृहीत्वा बहुतरं, स्वयं निर्विण्णेऽस्मिन् दददयमनिर्विण्णहृदयः ।
अहो ! किञ्चित् कोऽपि क्वचिदपि न याचेत वचनं, चिरादुच्चार्येदं **धवलकपुरे** गन्तुमुदितः ॥ ५

दुष्कर्माद्रिपविः पवित्रमहिमा नास्यां कदाचिन्महा-
मोहध्वान्तरविः प्रविक्ष्यति भृशं सङ्घो महोत्साहवान् ।
इत्थं पापलिपिं विलुप्य करणे भालोपमे **वामन-
स्थल्याः** पुण्यदिनं चकार सुकृती कुर्वन् प्रवेशोत्सवम् ॥ ६

कर्पूरागुरुधूपधूमपटलैरुत्क्षिप्यमाणैः प्रति-
ग्रामं तीर्थकृतामनेन कृतिना ये जज्ञिरे वारिदाः ।

तैरेव त्रुटिते जले पथि तथा प्रेम्णैव वृष्टं यथा,
संपूर्णानि सरोवराणि न पुनः सिक्तोऽपि मार्गोऽनसाम् ॥ ७

स्वस्थानप्रसृतस्ववल्लभजनप्राग्भारसद्यःपरी-रम्भारम्भपुरःप्रसृत्वरमनोवेगावकृष्टैरिव ।
साकं सङ्गजनैः समुज्झिततमोभारैस्तदौत्सुक्यतो, गच्छद्भिर्धवलक्ककाभिधपुरोपान्तं प्रपेदे कृती ॥ ८

स्मेरत्काश्मीरनीरच्छुरितपथतया रागमासाद्य सद्यो,
लीलालोलत्पताकाञ्चलतरलचमत्कारिचञ्चत्कटाक्षा ।
जातक्षोभा पुरीयं सविपुलपुलकाकीर्णदूर्वाङ्कुराग्रैः,
प्राप्ते श्री**वस्तुपाले** सति सचिवशचीवल्लभे वल्लभेऽस्मिन् ॥ ९

इयं सर्वाङ्गीणप्रगुणितविभूषा किल तदा, तदाश्लेषं यावत् क्षणमिव पुरी भासुररसा ।
अभूदन्तःशून्या हृदय इव याते पुरजनैः, समं श्रीमन्त्रीशं प्रति सरभसं **वीरधवले** ॥ १०

श्री**वीरधवल-तेजःपाला**भिधसचिवमध्यगः सचिवः ।
त्रिपुरुषरीतिस्थापितहर इव हरति स्म तत्र मनः ॥ ११

भास्वन्निःस्वानभेरीमुरजभरजनिध्वानसन्तापभीति-
भ्रष्टाहङ्कारदेवीकृतरभसपरीरम्भसंरम्भहृष्टैः ।
शक्राद्यैर्देवचक्रैरपि सचिवपतिः स्तूयमानस्तदानीं,
प्रारेभेऽसौ प्रवेशं पुरि पुलकिवपुःपौरदृक्पीयमानः ॥ १२

अथ पृथुकमतुच्छैरेतदुत्सङ्गयन्त-स्त्रिभुवनमपि शब्दैरब्दसंवावदूकैः ।
नवभणितिविदग्धा मागधा भागधेय-प्रगुणितगुणभाजं तुष्टुवुर्मन्त्रिराजम् ॥ १३

जय जय नयशालिन्नासमुद्रान्तपृथ्वी-वलयमिलितकीर्ते ! मन्त्रिचक्रैकशक्र ! ।
दलितकलिविलास ! प्रस्फुरत्तीर्थयात्रा-कृतकृतयुगनव्यप्रस्तुते ! **वस्तुपाल** ! ॥ १४

बलिरपि कलिकाले याचकालीकराले, यदि भृशमभविष्यद् दानवो दानशौण्डः ।
इति भवदवलोकाद् विष्णुयत्नं विनाऽपि, स्वयमयमगमिष्यद् देव ! पातालमूलम् ॥ १५

श्रीविश्रामास्पदमपि मदाद् दासयस्याशु रुष्टः,
स्पष्टं तुष्टो जनयसि जनं श्रीविनिद्रं दरिद्रम् ।
सामर्थ्यं ते स्वयमिति समालोक्य धाता न सौस्थ्यं,
नो दौस्थ्यं वाऽधिप ! नृषु लिखत्यन्यथाभावभीत्या ॥ १६

सङ्गः सङ्गतगौरवैः सह सदा कार्यो न कार्यः पुन-
र्नीचैरीदृगनीदृशं जलपतेः पुत्री पुराऽपाठि यत् ।
तस्यां तत्पठनस्य निःशठतया पाठं ददत्यां दधे,
मुद्रा हाटकपट्टिकेव सलिपिः श्री**वस्तुपाल** ! त्वया ॥ १७

श्रीमन्त्रिमुख्य ! भवदीयविपक्षलक्ष-दुष्कीर्तिभिस्त्रिभुवनं परितः परीतम् ।
क्वाहं स्फुरामि तव कीर्तिरितीव वक्तुं, कर्णोपकण्ठमगमत् पलितच्छलेन ॥ १८

श्रीसोमान्वयवार्धिवर्धनविधो ! मन्त्रीश ! वागीश्वरी-
लीलातल्प ! भवानकल्पि जगतः साधारणो वेधसा ।
इत्थं दाननिदानवैभवभवद्भालस्थलस्थापितै-
रेवैभिर्विभवाक्षरैर्विभवभाग् दुःस्थोऽपि सौस्थ्यं दधौ ॥ १९

कोपे पावकतप्तमार्गगसमं चक्षुः क्षिपन्ती पुनः,
प्रीतौ मौक्तिकदामसोदरमियं भ्रूरेव मन्त्रीश्वर ! ।
उल्लासान्निधनं धनं च ददती प्रत्यर्थिनामर्थिना-
मप्येषा किमु चापवल्लिरतुला किं कल्पवल्लिस्तव ? ॥ २०

आन्दोलयन्ति कृतिनस्तव कर्णदोला-लीलासु ये गिरमुदारमुदा रसाढ्याम् ।
भूकल्पवृक्ष ! तनुषे निजमौलिकम्पात्, तेभ्यः फलं दिवि यशःकुसुमान्युदस्यन् ॥ २१

का शक्तिर्द्युसदां सुधारुचिरसावेकः क्षयी पीयते,
तैः पक्षान्तरितोऽखिलैरपि समे निघ्नन्तु दैत्यास्ततः ।
अक्षीणस्य सदा त्वदाननसुधाभानोः पिबन् वाक्सुधा-
मेकः सद्म बलस्य वीरधवलो यावन्न सन्नह्यते ॥ २२

अंसौ ते सचिवावतंस ! निबिडाहङ्कारकारस्करा-
वष्टम्भस्थिरपौरुषद्विपमहाकुम्भभ्रमं भेजतुः ।
कुम्भावभ्रमुभर्तुरुद्धुरहरिस्फूर्जत्करास्फालन-
त्रस्ताऽसौ परिहृत्य नित्यसुखिता विश्राम्यति श्रीरिह ॥ २३

बुद्धिर्लतेव तव विस्फुरिता समस्त-शास्त्रामृतैरिह भृते हृदयालवाले ।
श्रीवस्तुपाल ! भुवि यत्प्रभवा प्रसून-मालेव मौलिषु न कैरघटि त्वदाज्ञा ? ॥ २४

श्रीसोमान्वयकुट्टिमोद्धृततुलापट्टः पतद्दुर्बल-श्रेयोयष्टिरनिष्टविष्टपविपत्सन्दोहलोहार्गला ।
श्रीविश्रामतरुः पराक्रमकरिस्तम्भो रिपुक्षोणिभृद्-दम्भोलिस्तव भाति गूर्जरधरोद्धारैकधुर्यो भुजः ॥ २५

असौ भृशं सन्ततसञ्चरिष्णु-लक्ष्मीपदालक्तकरक्तकान्तिः ।
भवत्कराम्भोरुहवद् विभाति, कृष्णारिनारीचिहुरालिपालिः ॥ २६

असन्नं सन्नद्धे यदिह विहरन्मार्गणगण-स्मयस्मेरे मेरोः कटकमटितः कल्पविटपी ।
इति व्यक्तं युक्तः सचिवकुलकोटीर ! करज-व्रजव्याजेनायं मणिमुकुटबन्धस्तव करे ॥ २७

किल जगति भवद्गतिं विलोक्य, स्वगतियशःक्षितिभीरवः सुरेभाः ।
सचिव ! तव भुजेऽपि भूमिभारं, दधति पदात् पदमप्यमी न चेलुः ॥ २८

क्रमकमलयुगेऽस्मिन् सेवका देव ! कामं, तव सचिव ! नमन्तः प्रीतिमन्तः समन्तात् ।
नखरुचिजलवीचीधौतभालस्थदौस्थ्या-क्षरततय इवामी भूतिभारं भजन्ते ॥ २९

इति वर्ण्यमानगुणगौरवो रवो-द्धुरबन्दिवृन्दवरभारतीभरैः ।
जिनदेवतालयपुरस्सरः शनैः, प्रविवेश **पत्तन**मसौ महामतिः ॥ ३०

अथ तं विलोकयितुमाकुलं कुलं, सुदृशां गवाक्षपदवीषु कौतुकात् ।
अचलत् तदार्द्धकृतमुक्ततत्क्षण-क्रियमाणकर्मतति दर्शितादरम् ॥ ३१

विरचय्य काऽपि मणिकुण्डलं श्रुतौ, द्रुतमेकमेव चलिता कुतूहलात् ।
जगदुत्तमाननकुशेशयस्मय-स्वयमागतद्युमणिमण्डला बभौ ॥ ३२

औत्सुक्यभावकृतभूषणवैपरीत्या, कर्णावलम्बितमणिश्रितकङ्कणाभ्याम् ।
काचिच्चकार जितकुञ्जरकुम्भशोभे, पीनोन्नतस्तनतटे मुकुटावबन्धम् ॥ ३३

औत्सुक्यतः काचन चित्रकार्थं, करे गृहीतां मृगनाभिमेव ।
स्निग्धाञ्जनभ्रान्तिवशात् किरन्ती, नेत्रद्वये तत्र दधौ मृगत्वम् ॥ ३४

वैकक्षमाल्यमिलितः शुशुभेऽपरस्याः, पक्षान्तरप्रसृमरः कबरीकलापः ।
सर्वायसं कुसुमकार्मुकसन्निधाने, पृथ्वीवरानिव निहन्तुमधादनङ्गः ॥ ३५

ताडङ्कमेकं कर एव काचित्, तदा वहन्ती चपलं चचाल ।
त्रैलोक्यजैत्रस्मरचक्रवर्त्ति-पताकिनीवाग्रविलासिचक्रा ॥ ३६

आधात् पदे सपदि काचन काञ्चनस्य, हिञ्जीरमङ्कुरितकौतुकमेकमेव ।
स्त्रीषु स्वकीयविजयध्वजिनीषु विश्वे, दत्तं तु वीरकटकं मकरध्वजेन ॥ ३७

कृत्वैकमेव निजमञ्जनमञ्जु नेत्र-माबिभ्रती परमनञ्जनमेव काचित् ।
आभूषितं नु सहजं नु विशेषहृद्यं, जालागता किल विचारयतीव लोकैः ॥ ३८

काचित् तदा मन्त्रिवरं निरीक्ष्य, कञ्चिद् विभावं हृदये वहन्ती ।
दष्टाधरा पाणिपुटैरुरःस्थं, पिण्डीकृतं पीडयति स्म हारम् ॥ ३९

काचिद् भुजाभ्यां बहिरङ्गभावा-च्छून्यं यदाऽऽलिङ्गनमाततान ।
अन्तर्गते मन्त्रिवरेऽन्तरङ्ग-भावादशून्यं हृदये तदाऽऽसीत् ॥ ४०

इत्थं गौरवगौरपौररमणीरङ्गत्कटाक्षच्छटा-गुच्छच्छायमयूरपिच्छघटितच्छत्रच्छविच्छादितः ।
मन्दं मन्दममन्दबन्दिवचनैरानन्द्यमानो ययौ, धन्यः सौधमसौ धरातलसुधाधाराधरो धीरधीः ॥ ४१

मूर्त्तीस्तीर्थपतेरथाऽऽलयपदेऽध्यारोप्य लोकं पुनः,
सम्मानोचितचातुरीपरिचितः सर्वं विसर्ज्य क्षणात् ।
साक्षादक्षतपात्रपूरितकरप्रेयःप्रसिद्धाङ्गना-
रङ्गन्मङ्गलवर्धितः स गमयामास स्मितो वासरम् ॥ ४२




किञ्च—

तात ! ख्यातगिरः सुता मम हता ही ! **कालिदासादयो,**
नन्वेकस्तु चिरायुरस्तु जगति श्री**वस्तुपालो**ऽधुना ॥
मार्कण्डः स्फुटमाशिषा शमवतामल्पायुरप्येष यत्,
कल्पायुर्जयतीति वाग्निगदने धाताऽस्तु जातादरः ॥ १

श्री**वस्तुपाल** ! भवदीययशोऽङ्गजस्य, शश्वन्नभोऽङ्गणविहारमनोहरस्य !
सारङ्गसङ्गतकरस्तरवारिधारि-रक्षाभटश्रियमुरीकुरुते सितांशुः ॥ २

**सिन्धुराज**विजयोज्ज्वलं यशो, **वस्तुपाल** ! तव चन्द्रवद् दिवि ।
यत्र दुःखपटलीमलीमसं, **सिन्धुराज**मुखमेव लाञ्छनम् ॥ ३

यत् कवेर्**लवणसिंह**जन्मनः, काव्यमेतदमृतोददीर्घिका ।
**वस्तुपाल**नवकीर्तिकन्यया, धन्यया किमपि यत्र खेलितम् ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मि-**न्नरसिंह**विनिर्मिते । इमान्यकृत चत्वारि, काव्यान्य**मरपण्डितः** ॥ ५

**॥ इति सुकृतसङ्कीर्त्तननाम्नि महाकाव्ये पुरप्रवेशो नाम दशमः सर्गः ॥ १० ॥**



आसाद्य **वीरधवलाधिपति**प्रदत्त-श्री**स्तम्भतीर्थ**नगरप्रभुतामथासौ ।
कीर्तीः क्षितौ तनुमतीरिव कीर्तनानि, कर्तुं समारभत मन्त्रिशिरोऽवतंसः ॥ १

**पञ्चासराह्वमणहिल्लपुरी**पुरन्ध्री-सीमन्तरत्नमिव **पार्श्वजिनेशवेश्म** ।
उद्धृत्य येन यशसा जनितो जरत्या, हस्तावलम्बनविधिर्**वनराज**कीर्तेः ॥ २

श्री**स्तम्भतीर्थ**नगरे रचयाञ्चकार, **भीमेशवेश्म**नि च काञ्चनकेतु-कुम्भौ ।
मूर्त्तेव कीर्तिरनिशं वरवैजयन्ती, नर्नर्ति यत्र दिवि देवनदीं जयन्ती ॥ ३

उत्तानपट्टमज(त)निष्ट पुरश्च **भट्टा-दित्य**स्य मूर्धनि च काञ्चनशेखरं सः ।
तत्रैव दूरतरतापयशःप्रताप-कारस्करद्वितयसम्भवबीजभूते ॥ ४

**भट्टार्क**पूजनवने **वहका**भिधाने, कूपं व्यधापयदसौ क्षितिनाभिरूपम् ।
दूर्वाङ्कुरप्रकरकर्बुरिताङ्गकुल्या-मार्गापदेशमिलितासितरोमराजिः ॥ ५

अग्रेऽपि तत्र **बकुला**भिधचण्डभानो-रुच्चैः सुधामधुरमण्डपकैतवेन ।
स्पष्टीकृतोऽयममुना प्रभवत्प्रभावो, भूमौ चमत्कृतिकृते स्वयशःशशाङ्कः ॥ ६

श्रीमानखण्डपदमण्डपमत्र मन्त्री, श्री**वैद्यनाथशिवसद्म** यदेष चक्रे ।
रोगव्ययाय कृतिनां दधदोषधीशं, तत्रावतारमकृत स्वयमेव देवः ॥ ७

उच्चैःपदं निजयशोभरसोदरस्य, तक्रस्य तेन विदधे यदशौचभीत्या ।
तत्र स्थितं तदनुवासरमात्मभासा, विक्रेयवस्तुषु हसत्युपरिप्रतिष्ठम् ॥ ८

अत्रैव साधुकृतयेऽद्भुतपुण्यलक्ष्मी-नेत्रोपमं **वसतियुग्म**मसौ चकार ।
यत्र प्रतिक्षणमहोत्सवहेतुभूता, भ्रूविभ्रमं वहति वन्दनमालिकैव ॥ ९

आरोहवैभवभृतं तरुणीमिवासौ, कुम्भस्तनीमुभयपक्षगवाक्षनेत्राम् ।
तेने प्रपामपि रसप्रसरप्रशस्यां, वीक्ष्यैव यामयति मङ्क्षु न निर्वृतिं कः ? ॥ १०

तेन व्यधायि **धवलक्कपत्तन**श्री-लीलाकुशेशयमिवाऽऽदि**जिनेन्दुचैत्यम्** ।
मुक्त्वाऽपि वल्लभजनाननपङ्कजानि, यत् पीयते जनविलोचनचञ्चरीकैः ॥ ११

अत्रापि तेन **वसतिद्वितयं** मुनीनां, हेतोरकारि सुकृतामृतपानपात्रम् ।
यस्माद् द्विधा प्रसृमरः शुचिकीर्तिपूरो, विश्वश्रियः श्रयति विस्तृतहारशोभाम् ॥ १२

या कीर्तिरस्य समभूदिह **राणकारुय-भट्टारकालय**समुद्धरणेन विश्वे ।
तस्या भुजङ्गमजगद्गमनाय मार्गं, वापीमिषादयमिहैव कृती वितेने ॥ १३

सा काऽपि कोमलयशोऽङ्गजवर्धनाय, धात्रीव तेन रचितेयमिह प्रपाऽपि ।
या पूरयेत तृषितेषु तदात्वजात-मन्येषु केषु न पयः कलशस्तनोत्थम् ? ॥ १४

**शत्रुञ्जयाद्रिमुकुटस्य** पुरो जिनस्य, ते**नेन्द्रमण्डप**मिदं तदकारि किञ्चित् ।
अप्येकवारमधिगम्य जना यदन्त-र्जन्मान्तरेऽपि न भजन्ति कदाऽपि तापम् ॥ १५

अत्र व्यधापयदयं नव**मुज्जयन्त-श्रीस्तम्भनाधिपजिनाधिपचैत्ययुग्मम्** ।
तत्केतुकैतवकरद्वितयेन कीर्ती, **रम्येन्द्रमण्डप**शिरोभुवि नृत्यतीव ॥ १६

लक्ष्मीर्मयाऽवलगिता जगदेकभर्तु-र्भक्त्या ततोऽवलगयेयमिमां च देवीम् ।
**वाग्मूर्ति**मत्र रचयन्निति स स्वमेक-माकल्पमीशमपि वाग्गिमनमप्यशंसत् ॥ १७

मूर्तीर्विधाप्य निजपूर्वजपुरुषाणां, तेनात्र नित्यरुचिपद्मनिभैस्तदास्यैः ।
या प्रीणिता रजनिमीलनशीलपद्म-दुःस्था किमेनमपि मुञ्चति साऽपि लक्ष्मीः ? ॥ १८

मूर्तित्रयं हरिकरिस्थमपूरि **तेजः-पालस्य वीरधवलस्य** तथाऽऽत्मनोऽसौ ।
सन्नद्धमुद्धुरकलिप्रलयाय मूर्त-मग्र्यं युगत्रयमिवात्र पवित्रदेशे ॥ १९

चत्वार्ययं चतुरधी**रवलोकना-ऽम्बा-प्रद्युम्न-शाम्बा**शिखराण्यवतार्य तत्र ।
तज्जन्मकीर्तिनिवहस्य चतुर्मुखत्वाद्, धातुः श्रियं निदधतोऽपि बभूव धाता ॥ २०

आलोक्य वीक्षितपुरातनभूपभक्त्या, चैत्यश्रिया जिनपतेस्तमतीवभक्तम् ।
अन्तश्चमत्कृततया शिरसीव क्लृप्तौ, पाणी तदीयकृततोरणकैतवेन ॥ २१

श्री**सुव्रतं भृगुपुरा**दयमत्र मन्त्री, **वीरं** च **सत्यपुरतः** पुरतोऽवतार्य ।
ताभ्यां सदा विहितदीपमनोहराभ्यां, लोकद्वयीमपि मुदा विशदीचकार ॥ २२

भामण्डलप्रतिनिधिर्विदधे जिनेन्दो-र्यस्तेन तत्र मणि-काञ्चनपृष्ठपट्टः ।
तत्कान्तिभिर्निदलितेषु तमस्सु चैत्ये, दीपा जयन्ति यदि पूजनमङ्गलाय ॥ २३

यच्छातकुम्भमयतोरणकुम्भजातं, तत्राधरीकृतरविच्छवि तेन तेने ।
तेनायमद्रिपतिरुग्रतरप्रभावः, सम्भाव्यतेऽप्यहरहर्ज्वलदोषधीशः ॥ २४

यद्यम्बरे सुरगुरोरिव मे व्याधास्यद्, वेधाः स्थितिं तदहमत्र मुहुर्निरीक्ष्य ।
अभ्रंलिहाद्रिपतिमूर्धनि कीर्तनौघ-मेतेन कारितमसङ्कचमवर्णयिष्यम् ॥ २५

श्रीपादलिप्तपुरसीम्नि सरः स चक्रे, यस्यातिरेकमधुरे लुठतीव तीरे ।
नित्यं नितान्तमधुरीभवितुं सुधाभुग्-भोग्यः सुधारुचिरपि प्रतिमामिषेण ॥ २६

एष स्फुरद्गुरुमुनिप्रसरामिहैव, स्वर्दण्डदर्शनपरां वसतिं वितेने ।
यस्यां यशःसितरुचिर्विशदः स कोऽपि, जज्ञेऽस्य यत्र विधुरेव बभूव चिह्नम् ॥ २७

तत्र प्रपेयमपि तेन नवा वितेने, यां प्राप्य शीत-मधुरोज्ज्वलहारिवारिम् ।
पीयूषकुण्डहिमधामजमेव गर्व-सर्वस्वमन्यजगतोर्जगती बभञ्ज ॥ २८

माधुर्यधुर्यमतुलामृतकुण्डवृन्द-स्यन्दानुविद्धमिव यत्र जलं रराज ।
ग्रामेऽर्कपालितकनामनि तेन तेने, पातालमूलगतखातगुरुस्तडागः । २९

श्रीस्तम्भनाख्यपुरतीर्थपतिं विधाप्य, शत्रुञ्जयाचलजिनं च स उज्जयन्ते ।
द्वेधोत्थितैर्दिवि यशोभिरदादपूर्वं, द्वैराज्यदुःखममृतांशु-नभःश्रवन्त्योः ॥ ३०

स स्तम्भनाभिधपुरेऽद्भुतमुद्दधार, श्रीपार्श्ववेश्म किमपि स्मितवैभवं तत् ।
यत्रागतौ नवकृतप्रतिमाछलेन, कौतूहलाद् विमल-रैवतकाद्रिदेवौ ॥ ३१

तेन प्रपाद्वयमिहाघटि पार्श्वपार्श्व-स्थित्यैव तादृशगुणप्रगुणं किलैतत् ।
छायामनोज्ञममृताभजलं बिभेद, तापं बहिःस्थमबहिःस्थमपि प्रजायाः ॥ ३२

श्रीवैद्यनाथसदनात् किल मालवेशो, दर्भावतीभुवि जहार सुवर्णकुम्भान् ।
श्रीकेलिवेश्म सचिवस्तु स वस्तुपाल-स्तस्मिन् दधौ दिनपतिप्रतिमत्विषस्तान् ॥ ३३

चक्रेऽर्बुदाख्यगिरिमूर्ध्नि निजाग्रजन्म-श्रीमल्लदेवसुकृताय स मल्लिदेवम् ।
तद्देहदीधितिभिरञ्जनमञ्जुलाभि-र्लक्ष्मायितं भृशममुष्य यशःशशाङ्के ॥ ३४

शक्तः क्व वक्तुमहमल्पमतिर्बहूनि, श्रीवस्तुपालसचिवेश्वरकीर्तनानि ? ।
यत्सङ्ख्यया दिवि विधिर्व्यधितोडुबिन्दून् , शीतांशुना खटिकयैव फलानि दातुम् ॥ ३५

ईदृग्मन्त्रिकिरीटकीर्तनघटासङ्घटयमानैर्मुहुः,
कीर्तीनां निवहैरहम्प्रथमिकावष्टम्भसंरम्भिभिः ।
तन्मानाधिकवर्धनव्यसनिभिर्मन्ये विभिन्नं नभः,
स्वर्दण्डच्छललक्ष्यमाणविशदप्रस्फोटरेखास्पदम् ॥ ३६

